NOW AVAILABLE AT ALL LEADING BOOK SHOPS



**Hiya! What has hit the animal world?**

Listen hard and look keenly.

**Do you hear the jingle of the jungle?**



# JUNGLE JINGLES




A set of five story books
with the whackiest and most interesting
collection of animal stories ever written —
for Rs.175/- only

Each book priced Rs.35/- only



CHANDAMAMA   Popular prakashan

FOR FURTHER ENQUIRIES CONTACT :
CHANDAMAMA INDIA LTD., 82, DEFENCE OFFICERS COLONY,
CHENNAI - 600 097.

# सङ्घटितं भारतम्






"अस्मदेकतायाम् एव अस्माकं बलं विद्यते; तद्भङ्गाय कस्यापि अवसरः मा कल्प्यताम् । अभिन्नाः वयम् एकीभूय तिष्ठाम । अस्माकं शान्तेः सम्पदः च नाशनस्य तेषां (भयोत्पादकानाम्) ऐषमः प्रयत्नः न प्रथमः । एतत् भारतम् अवनतं कर्तुं जगति कापि शक्तिः न शक्नोति, वयं भारतीयाः एकीभूय एव स्थास्यामः इति तथ्यं न अवगतं तैः" ।

डा॰ मनमोहनसिंहः

भारत प्रधानमन्त्री

अस्माकं प्रधानमन्त्रिणः इमानि वचनानि अस्मत्सङ्कल्पं दृढतमं कुर्वन्ति इति प्रपञ्चं वक्तुं सङ्घटिताः भवेम ।

भयोत्पादकैः काश्मीरेषु मुम्बईनगरे च कृतेषु स्फोटकेषु मृतानां परिवाराणां सहानुभूतिं प्रकटयति, आसु दुर्घटनासु क्षतगात्राणां तथा च समग्रदेशे स्वयं प्रेरणया अविचलेन मनसा एतादृशम् अनूह्यं दुष्टकृत्यं सम्मुखीकुर्वतां कृते सहभावं दृढीकरोति **चन्दमामा** ।

चन्दमामा
सम्पुटः -२३ अगस्ट् -२००६ सञ्चिका - ०८

# एतस्य अङ्कस्य विशेषाः

## अन्तरङ्गम्
















**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १५०/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -

चेन्नै - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

देहली - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ -*
चक्रपाणिः, बि. नागिरेड्डिः च

# स्वातन्त्र्यसंरक्षकैः भवितव्यं बालैः

१९४७ तमे वर्षे स्वतन्त्रस्य भारतस्य जन्म जातम् । तस्मिन् एव वर्षे जन्म प्राप्तवत्या *चन्दमामया* स्वीये प्रथमे सम्पादकीये उद्देशं विवृण्वत्या उक्तम् आसीत् - 'सर्वसम्बद्धानाम् अंशानाम् उपस्थापनेन राष्ट्रैक्यस्य सम्पादनाय, बालेषु राष्ट्रविषये अभिमानस्य संवर्धनाय, शतशः वर्षाणि अनुवर्तमानायां सांस्कृतिकपरम्परायां बालानाम् आस्थायाः सम्पोषणाय च पत्रिका एषा प्रकाशयिष्यते' इति । संस्थापकसम्पादकः तरुणान् वाचकान् तदा अभ्यर्थितवान् आसीत् यत् महता श्रमेण आसादितस्य एतस्य स्वातन्त्र्यस्य संरक्षकैः भवितव्यं भवद्भिः इति ।

५९ वर्षाणाम् अनन्तरम् इदानीम् अपि *चन्दमामा* तान् तरुणान् वाचकान् अभ्यर्थयति यत् वैयक्तिकीं मतीयां च सीमाम् अतिक्रम्य दृष्टिः प्रसारणीया, महतः देशस्य अस्य विकासाय बद्धश्रद्धैः भवितव्यं च इति । नगरादिषु या सम्पदभिवृद्धिः दृश्यते ताम् अवलम्ब्य न हि देशस्य प्रगतेः मापनं करणीयम् । समग्रे देशे सुखशान्त्यादयः कियता प्रमाणेन सन्ति इत्येतत् एव प्रगतेः मानस्य आधारः स्यात् ।

किञ्चन राष्ट्रियं सर्वेक्षणं वदति - देशे ३५% जनाः ऊनपञ्चदशवर्षीयाः इति । सा एतत् अपि ज्ञापयति यत् पुनः १०-१५% जनाः तदूर्ध्ववयस्काः ऊनविंशाः च स्युः इति । एते एव वस्तुतः समाजघातकान् अंशान् वारयितुं समर्थाः । देशस्य गौरवं तुङ्गशिखरं प्रापयितुम्, अभिवृद्धिशीलदेशानां पुरतः अनुकरणार्हताम् उपस्थपयितुं च ते एव शक्नुयुः । आत्मसमर्पण-पूर्वकम् अस्मत्पूर्वजैः यत् स्वातन्त्र्यं सम्पादितं तस्य नूतनम् आयामं कल्पयितुम् अपि ते एव क्षमाः ।

अतः चन्दमामा अभिवन्दते तान् सर्वान् ।

*सम्पादकः* - विश्वम्

Visit us at : http://www.chandamama.org



# वाचकानां पुटोऽयम्

## गोवाराज्यीया श्रद्धा उभयकर लिखति -

गतात् वर्षद्वयात् अहं संस्कृतचन्दमामायाः ग्राहिका अस्मि । एषा बालान् ज्येष्ठान् सर्वविधान् वाचकान् चापि परितोषयति । एषा उत्तमानि मौल्यानि उत्तमां संस्कृतिं च वाचकेषु आरोपयति । संस्कृतसम्भाषणाय अपि एषा उपकारिका । विविधप्रदेशीयाः जानपदकथाः, शिक्षणप्रदाः मनोरञ्जककथाः, वेतालकथा, चित्रशीर्षिकास्पर्धादयः, अन्ये अंशाः चापि अत्र द्रष्टुं शक्याः । अत्रत्या पुराणकथा चित्ताकर्षिका । 'भारतदर्शनं' ज्ञानप्रदम् उपयोगकरं च । पत्रिकास्थानि सर्वाणि चित्राणि उत्कृष्टानि । चित्राणां दर्शनात् कथापठनोत्साहः वर्धते । संस्कृतिसम्बद्धानाम् एतासां कथानां पठनात् जनानां व्यवहारः परिष्कृतः भवेत् । ते दैवत्वाभिमुखाः भवेयुः । चन्दमामा निश्चयेनास्ति उपकारिका ।

## बिहारीयः मनोरञ्जनप्रसादः लिखति -

बाल्यकालात् आरभ्य अहं चन्दमामायाः नियतवाचकः अस्मि । मध्ये किञ्चित्कालं परिस्थितिकाठिन्यकारणतः मया चन्दमामायाः पठनं परित्यक्तम् आसीत् । इदानीं तत् पुनः आरब्धम् अस्ति । आ प्राचीनकालात् अनुवर्तमानं तम् उत्कृष्टं गुणस्तरं चन्दमामा अद्यपि परिरक्षति यत् तत् मयि आश्चर्यं जनयति । कथाः अपि ताम् एव प्राचीनपरम्परां प्रतिबिम्बयन्ति । चित्राणां गुणवत्ता, मुद्रणस्य गुणस्तरः इत्यादयः मयि महान्तं प्रभावम् अजनयन् । सम्पादकसमितिः प्रकाशकाश्च अभिनन्दनार्हाः ।

## माहिमतः डा॰ नियतिदिक्षित लिखति -

अहं मम पुत्रस्य निमित्तं वर्षत्रयं यावत् संस्कृतचन्दमामायाः ग्राहकः आसम् । तस्य महाविद्यालये संस्कृताध्ययनं नास्ति इत्यतः ३६ सञ्चिकाः अपि अहं समीपस्थाय संस्कृतशिक्षकप्रशिक्षण-विद्यालयाय आसक्तानां छात्राणाम् उपयोगाय दत्तवान् अस्मि ।

## चेन्नै ऐ.ऐ.टि.तः एम्. श्राव्यया प्रेषितं पत्रम् -

अहं चन्दमामायाः नियतवाचिका अस्मि । एतां पत्रिकां विशेषतः इच्छामि अहम् । एतस्याः प्रकाशनं निरन्तरम् अनुवर्तताम् इति अहम् आशासे ।



# यादृशः व्यवहारः तादृशं फलम्

द्रविणलालः धनपुरस्य निवासी । सः कुसीदेन जीवति स्म । सर्वे जनाः तं निर्दयं मन्यन्ते स्म । महावीरनामकः कश्चन धनिकः तस्य विषये एवं वदति स्म - 'द्रविणलालं दृष्ट्वा सर्वैः अवगन्तव्यं यत् मनुष्यः कथं न भवेत् इति । अतः एव अहं वृद्धिरहितं ऋणं सर्वेभ्यः ददामि । तदपि गुप्तरूपेण ददामि'' इति ।

सः ग्रामे एवम् अपि प्रचारं कृतवान् - ''अहं ग्रामे बहुभ्यः जनेभ्यः सहस्राधिकानि रूप्यकाणि ऋणरूपेण दत्तवान् अस्मि । ते यदि मह्यं तत् धनं प्रत्यर्पयेयुः तर्हिः अहं तद् धनं मन्दिरणां निर्माणाय विद्यालयनिर्माणाय च दद्याम्'' इति ।

किन्तु ग्रामीणानां कथनम् आसीत् - ''कोऽपि यदि तस्य समीपम् ऋणयाचनाय गच्छति तर्हि केनापि व्याजेन सः ततः तं निष्कासयति किमपि अदत्त्वा । ऋणरूपेण, दानरूपेण वा सः किमपि न ददाति । लोके वचनशूराः अधिकाः । किन्तु यथा उक्तं तथा तु बहवः न आचरन्ति'' इति ।

किन्तु सुरजनामकः कृषिकः एकः एव महावीरं महापरोपकारिणं भावयति स्म । अत एव सः स्वपुत्र्याः विवाहार्थम् आवश्यकं धनं महावीरतः स्वीकर्तुम् इच्छन् तस्य समीपं गतः ।

तदा महावीरः उक्तवान् - ''परह्यः एव मया त्रिसहस्रं रूप्यकाणि दानरूपेण दत्तानि । ह्यः पुनः सहस्रं रूप्यकाणि अहं दत्तवान् वृद्धिं विना । अतः अद्य मम समीपे एकं रूप्यकम् अपि नास्ति । भवतः दौर्भाग्यम् एतत्'' इति ।

अनिवार्यकारणात् सुरजः द्रविणलालस्य समीपं गतः ऋणं स्वीकर्तुम् । तेन तु धनदाने कश्चन नियमः सूचितः - 'वर्षाभ्यन्तरे यदि ऋणप्रत्यर्पणं न भवेत् तर्हि भवता भवत्पत्न्या च मम गृहे विना वेतनं कर्म करणीयम्' इति । सुरजः एतत् अङ्गीकृतवान् । किन्तु वर्षाभ्यन्तरे



सः ऋणप्रत्यर्पणे अशक्तः अभवत् ।

द्रविणलालस्य ऋणप्रत्यर्पणाय सूरजः पुनः महावीरस्य समीपं गत्वा ऋणं याचितवान् । तदा महावीरः विचिन्त्य अवदत् - ''द्रविणलालगृहे कर्म कर्तुं भवान् सज्जः भवतु । ततः आजीवनं भोजनवसनादिव्यवस्थाचिन्ता भवन्तं न बाधिष्यते'' इति ।

''स्वामिन् अहं, मम पत्नी च कार्यं कर्तुं सन्नद्धौ । किन्तु मम पुत्रः शेखरः इमं विषयं न अङ्गीकरोति । सः किञ्चित् पठितवान् । अतः सः 'वाणिज्यं कृत्वा धनं सम्पाद्य ऋणं प्रत्यर्पयिष्यामि' इति कथयति'' इति ।

सूरजेन उक्तं वचनं श्रुत्वा महावीरः उक्तवान् - ''एवं तर्हि भवान् एकं कार्यं करोतु । शेखरं मत्समीपं प्रेषयतु । भवान् पत्न्या सह द्रविणलालगृहे कार्यं करोतु । अहं शेखरं योग्यं पुरुषं कृत्वा तद्द्वारा भवन्तौ ऋणमुक्तौ कारयिष्यामि । तदा ग्रामीणाः भवतः प्रशंसां करिष्यन्ति । इदानीम् एव दश कुटुम्बानि मम साहाय्यं प्राप्नुवन्ति सन्ति । एकादशं गृहं भवतः भवतु'' इति ।

सूरजः एतदनुगुणं शेखरं महावीरस्य अधीने संस्थाप्य स्वयं पत्न्या सह द्रविणलालस्य गृहं गतवान् । शेखरः वाणिज्यं कर्तुं महावीरं सहस्रं रूप्यकाणि पृष्टवान् । तदा महावीरः - ''लक्षं रूप्यकाणि दातुम् एव अहं सिद्धः । किन्तु अन्येन दत्तेन धनेन आरब्धं वाणिज्यम् उत्तमं न भवति । बुद्धिमत्ता एव वाणिज्यस्य मूलं धनम् । पूर्वम् अहं त्रिभ्यः दरिद्रेभ्यः आश्रयं दत्त्वा तेषां पालनपोषणं कृतवान् । तेषां नामानि पुराणिकः, रङ्गः, भद्रश्च इति । तेषां विवाहः अपि मया एव कारितः । वाणिज्यं कर्तुं एकैकस्मै सहस्रं रूप्यकाणि अहं दत्तवान् आसम् । किन्तु वर्षात् पूर्वमिव ते पुनः आगत्य वाणिज्ये हानिः अभवत् इति उक्त्वा पुनः मां धनसाहाय्यं प्रार्थितवन्तः । अहं धनं दातुं सिद्धः न अभवम् । अतः ते जनपुरं गत्वा तत्र वाणिज्यं कुर्वन्तः लक्षाद् अधिकानि रूप्यकाणि सम्पादितवन्तः । किन्तु मह्यं किञ्चित् अपि धनं न दत्तवन्तः'' इति उक्तवान् ।

तदा शेखरः उक्तवान् - ''अहं तादृशः न । भवता दीयमानं धनम् अहं वृद्धिसहिततया प्रत्यर्पयिष्यामि'' इति ।

एतत् श्रुत्वा महावीरः हसन् उक्तवान् - ''अहं वृद्धिम् अल्पामेव स्वीकरोमि । यतः



तेन धनेन अन्यस्य साहाय्यं भवति इति मम चिन्तनम् । भवानपि जनपुरं गच्छतु । तत्र तैः सह मिलतु । स्वबुद्धिम् उपयुज्य तेभ्यः यावत् शक्यते तावत् धनम् आनयतु । तदेव मूल-धनत्वेन स्वीकृत्य वाणिज्यम् आरभताम् । यदा लाभः प्राप्यते तदा तत् प्रत्यर्प्यताम्'' इति ।

ततः जनपुरं गतः शेखरः प्रथमं भद्रेण सह मिलित्वा तं महावीरेण उक्तम् अवदत् । तदा भद्रः कोपेन आरक्तमुखः जातः । तेन उक्तं – ''महावीरः व्ययं विना कीर्तिं प्राप्तुम् इच्छति । तेन अस्मभ्यं त्रिभ्यः किं दत्तम् इति किं भवान् जानाति ? एकैकस्य हस्ते त्रीणि रूप्यकाणि दत्तवान् सः - एकं रूप्यकं विद्याभ्यासाय, अपरं विवाहाय, अन्यत् वाणिज्याय च इति'' इति ।

तदा शेखरेण उक्तम् – ''धनं स्वीकर्तुम् अहं भवतः समीपं न आगतः । महावीरस्य कथनेन मम पितरौ विना वेतनं कार्यं कुर्वन्तौ स्तः । तस्य वचसि कियत् सत्यम् अस्ति इति ज्ञातुम् अहम् अत्र आगतः । इदानीं महावीरः योग्यया रीत्या दण्ड्यते मया'' इति ।

एतत् श्रुत्वा भद्रः उक्तवान् – ''यदि भवान् महावीरं दण्डयिष्यति तर्हि अहं भवन्तं मम वाणिज्ये भागिनं करिष्यामि । किन्तु ततः पूर्वं भवता एकं कार्यं करणीयम् । सप्ताहात् पूर्वं भवान् स्वस्य मातापितरौ तस्मात् कार्यात् विमुक्तौ कुर्यात् । अस्मिन् कार्ये भवतः बुद्धि-मत्तायाः परीक्षा भविष्यति'' इति ।

ततः रङ्गेन मिलितः शेखरः तमपि सर्वम् उक्तवान् । रङ्गः सर्वं श्रुत्वा आगतं कोपं निगृह्णन् तम् उक्तवान् – ''यदि भवान् महावीरं दण्डयिष्यति तर्हि अहं भवतः माता-पितरौ ततः विमुक्तौ करिष्यामि । एतदर्थं भवान् सप्ताहात् पूर्वं योग्यां कन्यां परिणयेत् । एतदपि भवतः बुद्धिपरीक्षायै एव'' इति ।

ततः पुराणिकः शेखरेण मिलितः । पुराणिकः पुत्रीमान् । पत्नी दिवं गता इत्यतः सः अन्याम् ऊढवान् आसीत् । पुत्री तु प्राप्त-वयस्का । तस्याः विवाहः शीघ्रं करणीयः इति इच्छति स्म पुराणिकः । यतः विमात्रा सह सर्वदा तस्याः कलहः भवति स्म । यदा शेखरः दृष्टः तदा सः अचिन्तयत् यत् एषः एव मम पुत्र्याः निमित्तं योग्यः वरः इति । अतः पुराणिकः शेखरम् उक्तवान् – ''अहं मम पुत्रीं भवते दातुं सिद्धः । किन्तु सप्ताहात् पूर्वं महावीरः दण्डनीयः । एषा भवतः



बुद्धिमत्तापरीक्षा'' इति ।

शेखरः बहुधा विचिन्त्य कञ्चन उपायं प्राप्तवान् । तम् उपायं सः पुराणिकम् उक्त-वान् । तं श्रुत्वा सन्तुष्टः पुराणिकः शेखराय त्रिंशत् रूप्यकाणि दत्तवान् । शेखरः धनपुरं प्रत्यागत्य महावीरेण मिलितः सन् उक्तवान् - ''पुराणिकः, भद्रः, रङ्गश्च उक्तवन्तः सन्ति यत् भवता तेभ्यः एकैकस्मै रूप्यकत्रयं दत्तम् इति । वृद्धिसहितं धनं त्रिंशत् रूप्यकाणि मम हस्ते दत्त्वा भवते अर्पणीयम् इति माम् आदिश्य ते माम् अत्र प्रेषितवन्तः । तैः एतदपि उक्तम् अस्ति यत् यदि भवता एतत् धनं न स्वीक्रियेत तर्हि वयमेव अत्र आगत्य विवादं करिष्यामः इति'' इति ।

एवं वदन् त्रिंशत् रूप्यकाणि महावीरस्य हस्ते दत्तवान् शेखरः । महावीरेण चिन्तितं यत् सत्यमेव ते आगत्य अत्र कोलाहलं कुर्युः इति । अतः सः शेखरम् उक्तवान् - ''एतं विषयं भवान् अन्यं कमपि मा वदतु'' इति ।

''अहं भवन्तम् आदर्शपुरुषं भावयामि । भवतः वचनानुगुणं करिष्यामि'' इति शेखरेण उक्तम् । एतस्य श्रवणात् महावीरः प्रसन्नः अभवत् । ततः शेखरः ग्रामप्रमुखान् दृष्ट्वा - ''महावीरः वचनशूरः, किन्तु कार्यं न करोति इति तु असत्यमेव । सः त्रिंशत्सहस्रं रूप्यकाणि कस्मैचित् दत्त्वा तूष्णीं स्थितवान् आसीत् । तत् धनम् अहं महता प्रयासेन तस्मात् आनीतवान् । धनस्य स्वीकर्ता वृद्धिसहितं लक्षं रूप्यकाणि दत्तवान् अस्ति । अनेन सन्तुष्टः महावीरः प्रतिज्ञातवान् अस्ति यत् भवतः

मातापितरौ अहम् ऋणमुक्तौ करिष्यामि इति । मह्यम् उद्योगस्य दानं, मम विवाहस्य निर्वर्तनं चापि अङ्गीकृतवान् अस्ति सः । इतःपरं मम कापि चिन्ता न भविष्यति'' इति उक्तवान् ।

एषा वार्ता महावीरेणापि श्रुता । भीतः सन् सः शेखरम् आहूय उक्तवान् - ''भवान् मह्यं त्रिंशद्रूप्यकमात्रं दत्तवान् । किन्तु भवता ग्रामे प्रचारः कृतः यत् लक्षं रूप्यकाणि दत्तानि इति । मया भवतः उपकारस्य विषये किमपि न उक्तम् एव । तथापि ग्रामीणानां पुरतः मया वचनं दत्तमिति भवान् उक्तवान् । किमर्थम् एवं कृतं भवता ? भवतः कथनम् असत्यम् इति अहं सर्वान् वदिष्यामि'' इति ।

तदा शेखरः सविनयम् उक्तवान् - ''भवता पुराणिकभद्ररङ्गेभ्यः एकैकस्मै त्रीणि रूप्यकाणि दत्त्वा ग्रामे घोषितं यत् एकैकस्मै लक्षं रूप्यकाणि दत्तानि इति । अस्य अर्थः एवम् अभवत् यत् त्रीणि रूप्यकाणि लक्ष-रूप्यकाणां समानानि अभवन् इति । यथा केवलेन दानकथनेन भवान् प्रसिद्धिं प्राप्तवान् तथैव अहमपि कर्तुम् इष्टवान् । मां प्रशंसेत् भवान् इति चिन्तितवान् आसम् अहम् । किन्तु भवतः अभिप्रायः भिन्नः इति ज्ञायते । एवं तर्हि ग्रामे मया उक्तं सर्वम् असत्यम् इति प्रचारयतु'' इति ।

'शेखरेण उक्तम् असत्यम् इति यदि अहं ग्रामे वदिष्यामि तर्हि मम वञ्चनम् अपि ग्रामीणैः ज्ञायेत । अतः तूष्णीं स्थितिः एव उचितम्' इति विचिन्त्य महावीरः किमपि न उक्तवान् एव । पूर्वं दत्तस्य वचनस्य अनुगुणं मन्दिराय पाठशालायै च दश सहस्राधिकरूप्यकाणि दत्तवान् सः ।

एतावता रङ्गभद्रपुराणिकाः जनपुरम् आगताः । भद्रः स्ववाणिज्ये शेखराय भागं दत्तवान् । रङ्गः द्रविणलालस्य ऋणं प्रत्यर्प्य शेखरस्य मातापितरौ मोचितवान् । पुराणिकः स्वपुत्रीं शेखराय दत्त्वा विवाहं निर्वर्तितवान् ।

जनपुरं प्रति गमनात् पूर्वं शेखरः उद्-घोषितवान् - ''मम जीवने यत् महत् परिवर्तनं जातं तस्य महावीरः एव कारणम्'' इति ।

एतद् श्रुत्वा - ''भोः शेखर ! मया पूर्वं यादृशः मार्गः अनुसृतः तादृशं भवान् अपि मा अनुसरतु'' इति उच्चैः हसन् उक्तवान् महावीरः ।





# भयङ्करः खातः

## १०

*[गुप्तमार्गः धूमेन आवृतः इति कारणात् ब्रह्मदण्डी मान्त्रिकः बहिः आगतवान् । शिष्यौ भाययित्वा ततः पलायनं करणीयम् इति चिन्तितम् आसीत् तेन । किन्तु तथा कर्तुम् अशक्तः सन् सः राजगुरुणा गृहीतः अभवत् । राजगुरुः सैनिकान् आदिशत् यत् वंशदण्डेन बद्ध्वा एषः नगरं प्रति नीयताम् इति । तदनन्तरम् ..... ]*

सेनापतिना प्रेषितेन सैनिकेन केचन ढक्कावादकाः आनीताः । तैः ढक्कावादनम् अपि आरब्धम् ।

वने वसन् नागरिकजनान् यः बाधते स्म सः मान्त्रिकः गृहीतः जातः इत्येतां वार्तां श्रुतवतां सर्वेषां सन्तोषः अभवत् । एषा वार्ता यथा यथा सार्वत्रिकी जाता तथा तथा उत्सवाचरणोत्साहः नगरे अधिकः जातः । बहवः ब्रह्मदण्डिनं मान्त्रिकं द्रष्टुं नगरस्य सिंहद्वारं प्रति गतवन्तः ।

द्वारेण सर्वप्रथमं राजगुरुः प्रविष्टवान् । सर्वे जानन्ति स्म यत् तस्य शक्त्या सामर्थ्येन च एव मान्त्रिकं ग्रहीतुं शक्यम् अभवत् इति । अतः तैः राजगुरोः भव्यं स्वागतं कृतम् । तस्य जयकारेण सर्वाः दिशः प्रतिध्वनिताः अभवन् । तदनन्तरं सेनापतिः, ततः सैनिकाः च आगताः । वंशे बद्धं मान्त्रिकम् उन्नीय सैनिकाः द्वारसमीपम् आगतवन्तः ।



मान्त्रिकं दृष्ट्वा जनाः हासपूर्वकं कोलाहलम् आरभन्त । केचन तु तस्य शिखां गृहीत्वा कम्पितवन्तः । अन्ये केचन तर्जनम्, इतरे केचन ताडनं च आरभन्त ।

मान्त्रिकं ताडयतः तु जनान् सेनापतिः वारयित्वा - ''एतस्य कापि हानिः न भवेत् । एषा राजाज्ञा अस्ति । अयं तादृशं रहस्यं जानाति, येन च अस्माकं साम्राज्यं सुसम्पन्नं भवेत् । सुवर्णं रजतं च प्रतिगेहं नृत्येत् । अतः एषः सर्वथा न पीडनीयः'' इति सतर्जनम् अवदत् ।

ब्रह्मदण्डी मान्त्रिकः जनानाम् एतत् तर्जन-भर्त्सनादिकं श्रुत्वा अवमानितः सन् भयेन कम्पमानः अभवत् ।

भयङ्करखाते लभ्यमानया सम्पदा राज्यं जित्वा, राजा भवेयम् इति आशा आसीत् तस्य मनसि । किन्तु सः एव इदानीं दैन्यस्थितिं प्राप्य अश्रूणि मुञ्चति । विवशता हतभाग्यता च तं भिक्षुकात् अपि नीचतरं जीवनं कर्तुम् आदिशति स्म ।

स्वं परितः आक्रम्य निन्दतः जनान् उद्दिश्य सः उक्तवान् - ''भ्रातरः ! क्षाम्यन्तु । मया बहुधा अपराद्धम् । किन्तु वने बहुविधपशुवेषं धृत्वा यः जनान् अबाधत, यः च सेनापतिं हतवान् सः अस्ति मम शिष्यः गर्दभः जयमल्लः । शक्यते चेत् तं गृह्णन्तु । तं नीचं केशवम् अपि मा त्यजन्तु'' इति ।

ब्रह्मदण्डिनः वचनानि श्रुत्वा तयोः विषये सैनिकाः बहुविधान् प्रश्नान् अपृच्छन् ।

''तौ तत्रैव पर्वते कुत्रचित् निलीय स्तः'' इति अवदत् मान्त्रिकः ।

केचन युवकाः तौ ग्रहीतुं दण्डादिकं गृहीत्वा ततः नगरप्रदेशद्वारात् पर्वतं प्रति प्रस्थिताः एव ।

वृक्षशाखासु निलीय नगरदिशि पश्यता केशवेन दीपदण्डान् गृहीत्वा आगच्छन्तः केचन युवकाः अवलोकिताः । तेन ब्रह्मपुरस्य सैनिकाः अपि दृष्टाः, ये एतयोः अन्वेषणं कृत्वा किमपि अलभमानाः प्रतिनिवर्तनं कुर्वन्ति स्म अवनतशिरस्काः सन्तः ।

नगरात् आगच्छतः सायुधान् युवकान् दृष्ट्वा केशवेन चिन्तितं यत् अवश्यं काचन विपद् आपतिष्यति इति । अतः सः सत्वरं वृक्षात् अवतीर्य आपतन्त्याः विपदः विषये पितरं जयमल्लं च अवदत् ।

जयमल्लः वृद्धश्च वृक्षम् आरुह्य दृष्टवन्तौ ।

यत् केशवेन दृष्टम् आसीत् तदेव दृश्यं दृष्टं ताभ्याम् अपि ।

तौ ततः अवतीर्णौ । जयमल्लेन केशवः उक्तः - ''सैनिकेभ्यः अपि एते नागरिकाः एव अधिकापायकराः सन्ति । एते शतशः आगच्छन्तः सन्ति । समग्रस्य पर्वतस्य आक्रमणं कर्तुम् अपि शक्नुवन्ति एते । इदानीम् इतस्ततः कम्पनाय अपि समयावकाशः नास्ति अस्माकम्'' इति ।

केशवस्य वृद्धस्य च मनसि विचारः आगतः यत् जयमल्लः यत् वदति तत् सत्यम् एव इति । ते सर्वे भीत्या किंकर्तव्यतामूढाः अभवन् । मनसि किमपि न स्फुरति स्म । यदि ब्रह्मपुरस्य नागरिकाणां हस्ते पतेम तर्हि बहुविधानि कष्टानि सोढव्यानि भविष्यन्ति इति ते अचिन्तयन् ।

'मान्त्रिकोऽपि सैनिकैः गृहीतः । अतः सः अस्मद्विषये प्रतीकाराय प्रयत्नं कुर्यात् एव । एतादृश्यां स्थितौ आत्मरक्षणं नितरां कष्ट-साध्यम्' इति भावः तेषां मनसि आगतः । तावता वृद्धस्य मनसि कश्चन उपायः स्फुरितः । सः तौ अकथयत् - ''भवन्तौ लताभिः मम हस्तपादबन्धनं कृत्वा एतस्याः शिलायाः उपरि मां त्यक्त्वा अरण्ये सुदूरं गच्छताम् । अस्मान् ग्रहीतुं ये आगच्छन्तः सन्ति ते यथा भवन्तौ ग्रहीतुं न शक्नुयुः तथा अहं किमपि करोमि'' इति ।

एवं कर्तुं केशवः सिद्धः नासीत् । जयमल्लः अपि एतद्विषये विरोधं प्रकटितवान् ।

तदा वृद्धः अवदत् - ''भवद्भ्यां यदि मम कथनानुगुणं न क्रियेत तर्हि अस्माकं त्रयाणाम्




अपि बन्धनं निश्चितम् । ततः अपि द्वयोः वा पलायनं वरम् । अहं तान् वदामि - भवन्तौ मां बद्ध्वा धावितवन्तौ इति । अहं वयसा ज्येष्ठः । मम कथनं किं न अङ्गीक्रियते भवद्भ्याम् ? किमपि भवतु । केनापि प्रकारेण यथा ते मन्येरन् तथा अहं करोमि एव । भवद्भ्यां सह अहं नास्मि, भवतोः रक्षणाय प्रयतमानः नास्मि इति विश्वासं तेषु अहं जनयिष्यामि उपायेन । तूर्णम् एव भवन्तौ इतः निर्गच्छताम् । अग्रिमम् अहं निर्वक्ष्यामि । मम बन्धनं कृत्वा अत्र मां परित्यज्य भवन्तौ इतः निर्गच्छताम्'' इति ।

अन्यः मार्गः न आसीत् एव । अतः जयमल्लः तं वृद्धं लताभिः बद्ध्वा शिलायाः उपरि शायितवान् । ''आगताः यदा प्रति-गमिष्यन्ति तदा आवां भवन्तं नयावः'' इति



केशवः उक्तवान् । ततः तौ वेगेन वनं प्रविष्टवन्तौ ।

अविलम्बेन एव कोलाहलं कुर्वाणानाम् आगच्छतां नागरिकाणां ध्वनिः श्रुतः । सः वृद्धोऽपि आक्रन्दनम् अकरोत् - ''रक्षन्तु, कृपया मां रक्षन्तु'' इति ।

ब्रह्मपुरनागरिकाः दण्डपाणयः धावन्तः एव तत्र उपस्थिताः । बद्धं तं वृद्धं दृष्ट्वा नितराम् आश्चर्यचकिताः अभवन् ते ।

''मां बन्धमुक्तं कुर्वन्तु । अहं जानामि यत् भवन्तः मान्त्रिकस्य शिष्ययोः अन्वेषणाय पर्वतप्रपातेषु भ्रमन्तः सन्ति इति । तौ एव कारणीभूतौ मम दुःस्थितेः'' इति तान् अवदत् सः ।

शीघ्रमेव द्वित्राः तस्य बन्धमोचने मग्नाः । केचन तं पृष्टवन्तः - ''तौ कस्यां दिशि धावितवन्तौ ? वने कुत्र निलीनौ स्तः तौ ?'' इति ।

''तौ अतीव चतुरौ स्तः । बहु एव भ्रमणशीलौ तौ । भवन्तः वने अन्वेषणं कुर्वन्ति इति चिन्तयित्वा भिक्षुकवेषं धृत्वा ब्रह्मपुरीदिशि धावितवन्तौ तौ । नगरे भिक्षुकेषु कस्यापि शङ्का न भवति । तान् न परीक्षन्ते सैनिकाः इत्यपि जानीतः तौ'' इति उक्तवान् वृद्धः ।

तदा तेषु आत्मानं बुद्धिमन्तं मन्यमानः कश्चित् अवदत् - ''तौ तत्रैव गतवन्तौ, यत्र वयं तौ न अन्विष्येम । सर्वेऽपि अकृत्यं कृत्वा नगरात् अरण्यं प्रति गच्छन्ति आत्मरक्षणाय । किन्तु एतौ अरण्यात् नगरं गतवन्तौ । अतः एव सैनिकैः तौ न प्राप्तौ । अनेन ज्ञायते यत् तौ बहु भ्रमणशीलौ इति । अधुना अरण्ये अन्वेषणं व्यर्थमेव । अनेन वृद्धेन सम्यक् एव उक्तम् । वेषपरिवर्तने चतुरौ प्रतीयेते तौ । तथापि गच्छाम, नगरे भिक्षुकान् विचारयाम'' इति ।

एवं वृद्धस्य वचसि सर्वे विश्वसितवन्तः । अतः अचिरात् एव ते ततः निर्गताः । मान्त्रिकस्य शिष्यौ भिक्षुकवेषधारिणौ भूत्वा नगरं प्रति धावितौ इति उच्चैः वदन्तः ते नगरं प्रविष्टवन्तः । सर्वान् भिक्षुकान् बन्धुम् उद्युक्ताः अभवन् च ।

मान्त्रिकस्य शिष्यौ ग्रहितुं ये गताः आसन् ते नगरम् आगत्य अपश्यन् यत् ब्रह्मदण्डी मान्त्रिकः बद्धः सन् कम्पमानः प्राणभिक्षां याचमानः अस्ति इति ।

जनानां सम्मर्दे युवकैः सह केचन बालकाः

अपि उपस्थिताः आसन् । तेषां कृते तु ब्रह्मदण्डी हास्यपात्रं जातः आसीत् । एतां दृश्यावलीं दृष्ट्वा विशेषतः बालकाः प्रसन्नाः आसन् । भिक्षुकवेषेण नगरे भ्रमन्तौ स्तः मान्त्रिकस्य शिष्यौ इति वार्ता सर्वत्र प्रसृता आसीत् । अतः तौ द्रष्टुम् उत्कण्ठिताः आसन् बालकाः अपि ।

राजा मन्त्री सेनापतिः च मान्त्रिकस्य विचारणया भयङ्करखातस्य रहस्यानि ज्ञातुं प्रयतमानाः आसन् । किन्तु मान्त्रिकः दृढतया वदन् आसीत् यत् यावत् मह्यं प्राणदानं न अनुमन्यते तावत् अहं किमपि न वदिष्यामि इति ।

''स्वप्राणानां विषये भीतिः मास्तु भवतः । राज्ञः पक्षतः अहम् अभयदानं करोमि'' इति वदन् राजगुरुः राजानं दृष्टवान् ।

अङ्गीकारमुद्रया शिरः चालितवान् राजा ।

ततः राजगुरुः मान्त्रिकम् अपृच्छत् - ''किम् एतत् सत्यं वर्तते यत् भयङ्करखाते अमितधनराशिः अस्ति इति ? एतत् सत्यम् अस्ति इत्यत्र किं प्रमाणम् ?'' इति ।

''मान्यवर राजगुरुवर्य ! उपासकानाम् आराध्यम् एतत् वदन्तम् उन्मत्तभैरवम् एताभ्यां नेत्राभ्यां दृष्टवान् अस्मि अहम् । इतोऽपि अधिकं प्रमाणं किम् अन्यत् अपेक्ष्यते ?'' इति अवदत् मान्त्रिकः ।

''भवतः वचनेषु कथं विश्वासः कर्तुं शक्यः अस्माभिः ?'' इति पुनः अपृच्छत् राजगुरुः ।

''भैरवेश्वर ! शान्तं पापम्, प्रतिहतम् अमङ्गलम्'' इति वदन् कर्णद्वयं हस्ताभ्यां स्पृष्ट्वा - ''आ विंशतेः वर्षेभ्यः भैरवेन्द्रस्य



साक्षात्काराय कठोरा उपासना कृता मया । तं भयङ्करखातं गन्तुं, यस्य जनस्य आवश्यकता आसीत् सोऽपि गृहीतः । खातं प्रति गमनाय यानि लक्षणानि अपेक्षितानि तानि सर्वाणि आसन् तस्मिन् जने । तावता सः दुष्टः जयमल्लः सेनापतिं मारयित्वा मम समग्रम् आशासौधं भस्मसात्कृतवान् । मम वचने भवतां विश्वासः नास्ति । इदानीं सः कालभैरवः एव मम शरणम्'' इति उक्तवान् मान्त्रिकः ।

''अपूर्वः भक्तः एव इति प्रतीयते अयम्'' इति साश्चर्यम् अवदत् राजा ।

तावता द्वारे महान् कोलाहलः श्रुतः । सेनापतिः तत्र गत्वा कम्पमानौ द्वौ सैनिकौ अपश्यत् । तौ धावन्तौ आगतवन्तौ आस्ताम् । तौ दृष्ट्वा राजा अवदत् - ''आगच्छताम् अन्तः । वदतां कः विचारः इति'' इति ।

''नगरयुवकाः भिक्षुकान् गृहीत्वा - भवन्तः मान्त्रिकस्य शिष्याः किम् इति ताडयन्तः पृच्छन्तः सन्ति । तेषां भिक्षुकाणां रक्षणाय गतान् अस्मान् अपि ते युवकाः ताडितवन्तः'' इति अवदत् कश्चन भटः ।

किं जातम् इति आश्चर्येण पश्यन्तं राजानं सेनापतिः उक्तवान् - ''ब्रह्मदण्डिनः उभौ शिष्यौ भिक्षुकवेषेण नगरे भ्रमतः इति जनश्रुतिः सर्वत्र प्रसृता अस्ति । एषा सत्या उत न इति वयं न जानीमः'' इति ।

अधः पतितं मान्त्रिकं पादेन प्रहरन् राजगुरुः क्रोधेन पृष्टवान् - ''अयि ! श्रुतं खलु भवता सर्वम् अपि ? भिक्षकवेषधारिणौ तौ शिष्यौ अभिज्ञातुं भवान् शक्नोति किम् ?'' इति ।

एतत् श्रुत्वा ब्रह्मदण्डी मान्त्रिकः शीघ्रमेव उत्थितवान् । उक्तवान् च - ''केनचिदपि वेषेण स्थितौ अपि तौ अहम् अवश्यमेव अभिज्ञातुं शक्नोमि'' इति ।

तावता मौनेन उपविष्टः मन्त्री अवदत् - ''तर्हि सर्वान् भिक्षुकान् किम् अहम् अत्र आनाययानि ?'' इति ।

शिरश्चालनेन स्वस्य अङ्गीकारम् असूचयत् मान्त्रिकः । ततः मन्त्री सेनापतिः च बहिः गतवन्तौ । तयोः आज्ञां प्राप्य सर्वे सैनिकाः भिक्षुकाणां ग्रहणाय नगरस्य सर्वेषु भागेषु विकीर्णाः अभवन् ।

- *(अनुवर्तते)*



वेताल-
कथा

# अहङ्कारस्य हेतुः

साहसमेव श्वासं मन्यमानः त्रिविक्रमः पुनः अपि वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्, ततः मौनेन यथापूर्वं श्मशानदिशि प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! अर्धरात्रसमयः एषः । निर्निमेषदृष्ट्या दृश्यते चेदपि किमपि गोचरं न भवति । एवं सत्यपि भवान् एतस्मिन् घोरे अन्धकारे अग्रे गच्छन् अस्ति निश्चिन्ततया । भवतः एतस्य दृढप्रयत्नस्य दर्शनेन ज्ञायते यत् कस्यापि जटिलस्य कार्यस्य साधनाय भवान् उद्युक्तः स्यात् इति । केचन एतादृशाः अपि भवन्ति ये आत्मानं महान्तम् असाधारणं मन्यमानाः सामर्थ्यात् बहिर्भूतम् अपि कार्यं



साधयितुं सङ्कल्पं कुर्वन्ति । ते न जानन्ति यत् आत्मनः अहङ्कारः एव स्वीकृते कार्ये सम्भ्रान्तिं जनयति इति । भवतः सावधानतायै कस्यचित् अहङ्कारिणः पण्डितस्य कथां श्रावयामि । श्रान्ततां विस्मृत्य कथां शृणोतु'' इति ।

ततः वेतालः कथाम् आरब्धवान् –

मुग्धरामः ब्रह्मपुरस्य कश्चित् सामान्यः कृषकः । श्रीचरणः तस्य अद्वितीयः पुत्रः । बाल्यात् आरभ्य सः आशुकविताः रचयति स्म । एतादृशीं प्रतिभां दृष्ट्वा परिमितनामकः आचार्यः तं शिष्यत्वेन स्वीकृतवान् । अन्यैः दशसु वर्षेषु यत् पठितुं शक्यं तत् श्रीचरणः त्रिषु एव वर्षेषु अधीतवान् आसीत् । अतः गुरुः परिमितः शिष्यस्य सामर्थ्यं श्लाघमानः अवदत् – ''मया यत् पाठनीयम् आसीत् तत्तु पाठितम् । इतःपरं दण्डकारण्यं गत्वा भवान् गुरुकुले शिक्षणं प्राप्नोति चेत् भवता प्रगतिः प्राप्येत'' इति ।

किन्तु श्रीचरणः गुरोः वचनं न अनुष्ठितवान् । यतः तस्य चिन्तनम् आसीत् – 'मम पिता महान्तं परिश्रमं करोति कुटुम्बपोषणाय । तस्य श्रमस्य निवारणं मम कर्तव्यम् । अतः मया गृहे एव तिष्ठता कृषिकार्ये तस्य साहाय्यं करणीयम्' इति ।

अथ कदाचित् कश्चन राजास्थानीयः कविः तं ग्रामम् आगतवान् । आचार्यः परिमितः श्रीचरणविषयं तं निवेद्य उक्तवान् – ''मयि शास्त्रज्ञानम् अस्ति एव । किन्तु कवितानां गुणावगुणज्ञानसामर्थ्यं मम नास्ति । अतः श्रीचरणस्य कवितां श्रुत्वा भवान् वदतु यत् एषः राजसम्मानं प्राप्तुं योग्यः भवेत् वा न वा इति'' इति ।

राजास्थानीयः कविः श्रीचरणस्य कवितां श्रुत्वा तम् अवदत् –''भवदीयायां कवितायां व्याकरणालङ्कारादिसम्बद्धाः दोषाः केचन सन्ति । अतः भवता इतोऽपि अधिकेन अवधानेन काव्यादिकं लिखता कौशलं सम्पादनीयम् । तथापि राजसम्माननं प्राप्येत इति न निश्चयः । यतः राजसम्माननं तु योग्यतामात्रेण न प्राप्यते । शङ्खपुरे महानन्दो नाम कश्चित् महापण्डितः अस्ति । सः यदि प्रमाणपत्रं दद्यात् तर्हि भवतः राजसम्मानन-पात्रता अवश्यं भवेत् एव'' इति ।

यदा श्रीचरणेन महानन्दपण्डितविषयकं विवरणं प्राप्तं तदा ज्ञातं यत् महानन्दः सञ्चारि-नामकस्य ब्रह्मपुरभूस्वामिनः दूरबन्धुः एव अस्ति इति । अतः श्रीचरणः भूस्वामिना

मिलित्वा प्रवृत्तं सर्वम् उक्तवान् ।

तदा सञ्चारिणा उक्तम् - ''महानन्दस्य कश्चन विचित्रः स्वभावः अस्ति । यदि अहं भवतः समर्थनं कुर्यां तर्हि सः मां पृच्छेत् यत् कविताविषये भवान् किं जानाति इति । अतः भवान् उत्तमं काव्यं रचयित्वा तं श्रावयति चेदेव वरं स्यात् । तस्य प्रशंसापात्रता प्राप्ता चेत् कार्यं सिद्धं भवेत् । केचन वदन्ति यत् सः महान् अहङ्कारी इति । सः अन्येषां दोषान्वेषणेन एव तुष्यति, तेन कदापि कस्यापि प्रशंसा एव न कृता इत्यपि श्रूयते'' इति ।

एतत् श्रुत्वा श्रीचरणः दृढनिश्चयम् अकरोत् यत् मया किञ्चन काव्यं रचयित्वा महानन्दस्य श्लाघनं प्राप्तव्यम् एव इति ।

ततः वर्षाभ्यन्तरे एव तेन 'श्रीकृष्ण-लीलामृत'नामकं काव्यं रचितम् । 'मया महानन्दस्य प्रशंसा प्राप्स्यते एव' इति आत्म-विश्वासेन सः शङ्खपुरम् अगच्छत् ।

तदवसरे महानन्दः गृहस्य पुरतः उपविश्य आरम्भनामकस्य युवकस्य कवितां शृण्वन् आसीत् । कवितायां विद्यमानान् दोषान् दर्शयन् तेषां च परिष्कारं च सूचयन् आसीत् सः । तत् दृष्ट्वा श्रीचरणः उच्चैः अहसत् ।

एतत् दृष्ट्वा पण्डितः अपृच्छत् - ''भवतः हासस्य कारणं किम् ?'' इति ।

तदा श्रीचरणः अवदत् - ''श्रीमन् ! यत् स्वभावेन निकृष्टं, तत् कथं प्रयत्नेन उत्कृष्टं कर्तुं शक्येत ? केवलेन दोषाणां समीकरणेन किं प्रयोजनम् ? भवान् महान् पण्डितः सन् अपि एवं व्यर्थतया समयं यापयति यत् तत् तु





महते आश्चर्याय । भवतः एतं व्यर्थप्रयत्नं दृष्टवता मया हासम् अवरोद्धुम् एव न शक्तम् । अतः एव अहम् अहसम् । क्षन्तव्यः अहम्'' इति ।

तदा महानन्दः श्रीचरणं नखशिखान्तं दृष्ट्वा अपृच्छत् - ''यः कवितारचनां कर्तुम् इच्छति तस्मिन् व्याकरणज्ञानं सम्यक् भवेत् एव । भवतः ज्ञानं तु असम्पूर्णम् अस्ति । तथापि उपहासचेष्टा भवतः । मम समयनाशकः भवान् कः ?'' इति ।

श्रीचरणः स्वनाम, ग्रामनामादिकम् उक्त्वा आगमनोद्देशं श्रावितवान् । तत् श्रुत्वा महानन्दः खिन्नः क्रुद्धः च सन् अवदत् - ''मम सेवां कर्तुम् आगतेन भवता मम दर्शनानुक्षणं पादयोः पतित्वा प्रणामः कर्तव्यः आसीत् । अशीर्वादः च प्राप्तव्यः आसीत् । गुरोः आदरणं कथम् इति आदौ ज्ञातव्यं भवता । तदनन्तरम् एव मम शिष्यत्वप्राप्तिविषये चिन्तनं प्रयत्नो वा भवतु'' इति ।

श्रीचरणः निराशः सन् ग्रामं प्रत्यागतः । भूस्वामी तस्य गमनपरिणामं ज्ञातुम् इष्टवान् । श्रीचरणः तम् अवदत् - ''महाशय ! भवता उक्तं सत्यमेव जातम् । सः महानन्दः महान् गर्वी एव । तस्य मुखात् मम प्रशंसायाः श्रवणम् अशक्यम् एव । इदानीं सा आशा मयि न वर्तते'' इति ।

कतिपयेषु दिनेषु अतीतेषु महानन्देन सञ्चारिवर्याय पत्रं प्रेषितं, यस्मिन् - ''भवद्-ग्रामस्य श्रीचरणेन लिखिते श्रीकृष्णलीलामृत-नामके काव्ये भवते ये श्लोकाः रोचन्ते ते प्रेष्यन्ताम् । एतत् प्रेषणं तेन न ज्ञातव्यम्'' इति लिखितम् आसीत् ।

सञ्चारिवर्येण स्वयमेव महानन्देन मेलितुं शङ्खपुरं प्रति प्रस्थितम् । मिष्टान्नखाद्यैः भोजितः सञ्चारी महानन्देन । भोजनोत्तरं तस्य प्रशंसां कुर्वाणः सञ्चारी काञ्चित् कविताम् अश्रावयत् । तस्य तात्पर्यं तु एवम् - ''भवतः पत्न्या कृतं मिष्टान्नं हरितकान्तिप्रसारकः पूर्णचन्द्रः इव अस्ति । तस्य अन्तः निहितम् अमृतं पातुम् उद्युक्तस्य मम कण्ठे तत् राहोः कण्ठे इव अवरुद्धम् अस्ति । यदा अहं मुखम् उद्घाटितवान् तदा भवतः पत्नी मां मृत्तिका-भक्षकं कृष्णं मतवती स्यात् । भवतः पत्नी यशोदा कृष्णस्य मातुः यशोदायाः सादृश्यम् आवहति'' इति ।

एतत् श्रुत्वा महानन्दः आश्चर्यम् अनुभवन् - ''भवान् यथा उक्तवान् तथा किमपि न

अभवत् । मम पत्नी अन्नमात्रं भोजितवती । भवता तु तस्यां मातृवात्सल्यं पश्यता भावचमत्कारेण या कविता श्राविता सा तु अपूर्वा एव । एषः श्लोकः श्रीचरणस्य काव्यात् स्वीकृतः तु न स्यात् खलु ?'' इति अपृच्छत् ।

''आम्'' इति वदन् अङ्गीकारपूर्वकं शिरः चालयन् पुनः अवदत् सञ्चारी - ''यदा श्रीचरणः भवन्निकटम् आगतः तदैव भवता तस्य काव्यस्य श्लोकाः श्रोतुं शक्याः खलु आसन्'' इति ।

ततः हसता महानन्देन उक्तम् - ''सा च अन्या एव कथा । तदीयम् अविनयं पश्यता मया तदीयं काव्यं न श्रुतम् एव । वस्तुतः तु श्रीचरणः राजास्थाने यदि काव्यं श्रावयेत् तर्हि निश्चयेन सम्मानं प्राप्नुयात्'' इति ।

सञ्चारी ब्रह्मपुरं प्रत्यागत्य शङ्खपुरे प्रवृत्तं सर्वं श्रीचरणम् उक्तवान् । एतेन सन्तुष्टः श्रीचरणः किङ्कर्तव्यतामूढः इव जातः । स्वल्पसमयानन्तरं सः आत्मनः संयमं कुर्वन् अचिन्तयत् - 'शङ्खपुरं गत्वा महापण्डितं यदि अहं काव्यं न श्रावयेयं तर्हि अहम् अहङ्कारी इति परिगणितः भवेयम्' इति । अतः तस्मिन् एव दिने सः शङ्खपुरं प्रति प्रस्थितः ।

तस्मिन् अपि दिने महानन्दः पूर्ववत् एव गृहस्य पुरतः उपविश्य कस्यचित् कवितां शृण्वन् आसीत् । श्रीचरणस्य दर्शनमात्रेण सः एव उत्थितवान् । श्रीचरणः तस्य पादयोः निपत्य अवदत् - ''आर्य ! कृपया मां स्वशिष्यं करोतु'' इति ।

आशीर्भिः तम् अनुगृह्णता महानन्देन



उक्तम् - ''आयुष्मान् भव वत्स ! कीर्तिमान् भव । मम वचनानुसारं शिष्यपरम्परा पालिता भवता । एतेन अहं नितरां सन्तुष्टः अस्मि । परश्वः पञ्चम्यां तिथौ भवतः काव्यस्य पठनं भवतु अत्र'' इति ।

तेन स्वगृहे एव श्रीचरणस्य वासः व्यवस्थापितः । तस्य तेन व्यवहारेण श्रीचरणः नितरां सन्तुष्टः अभवत् ।

श्रीचरणस्य काव्यस्य पठनं श्रोतुं बहुदूरतः विद्वांसः कवयः च आगतवन्तः । तेषाम् उपस्थित्या श्रीचरणस्य उत्साहः अपि द्विगुणः जातः ।

काव्यपठनोत्तरं काव्यस्य वैशिष्ट्यं यदा महानन्दः विवृतवान् तदा तत्र उपस्थिताः सर्वे अपि करताडनैः समग्रां सभां प्रतिध्वनिताम् अकुर्वन् ।

एवं कथां श्रावयित्वा वेतालः उक्तवान् - ''राजन् ! महानन्दः अहङ्कारी इत्यत्र विप्रतिपत्तिः नास्ति कापि । सर्वे तं महान्तं विद्वांसं मन्यन्ते स्म इति तु सत्यम् । किन्तु सः अन्येषां दोषान्वेषणं कृत्वा अपमानयति स्म, कस्यापि प्रशंसां न करोति स्म इत्यपि सत्यम् एव । तथापि सः सर्वेषां समक्षं सभायां श्रीचरणस्य श्लाघनं किमर्थं कृतवान् ? तस्मिन् एतादृशम् अनूह्यं परिवर्तनं किमर्थं प्रवृत्तम् ? गर्वी इति अपख्यातिं निवारयितुं किं सः तथा कृतवान् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''एतस्यां कथायां स्पष्टतया ज्ञायते यत् नैके विद्वांसः स्वकविताः श्रावयितुं महानन्दनिकटम् आगच्छन्ति स्म इति । प्रथमवारं यदा श्रीचरणः तस्य गृहं गतवान् तदा आरम्भनामकस्य कवेः कवितां श्रुत्वा तत्रत्यान् दोषान् निर्दाक्षिण्यं श्रावयन् आसीत् सः । तेनैव कारणेन सः गर्वी इति प्रचारः जातः । सः एव श्रीचरणस्य प्रशंसां कृतवान् इत्यत्र न किमपि आश्चर्यम् । यतः सः तु गुणपक्षपाती । तस्मिन् अकस्मात् परिवर्तनं जातम् इति कथनम् अनुचितम् एव । अविनयविषये एव तस्य असहना आसीत्, न तु गुणविषये'' इति ।

एवं राज्ञः मौनभङ्गकरणे सफलः वेतालः ततः अदृश्यः भूत्वा पूर्ववत् वृक्षे अतिष्ठत् ।






# अस्माकं राष्ट्रगीतम्

**१९११** तमे वर्षे रवीन्द्रनाथठागोरवर्येण रचितं 'जन गण मन'गीतं मूलतः बेङ्गालीभाषायाः अस्ति । तच्च गीतं 'तत्त्वबोधप्रकाशिका'नामिकायाम् आर्यसमाजीयायां पत्रिकायां प्रकाशितम् आसीत् ऐदम्प्राथम्येन । कतिपयानि वर्षाणि तस्याः पत्रिकायाः सम्पादकत्वं विहितं रवीन्द्रनाथठागोरवर्येण ।

१९१९ तमवर्षे कविः एषः बेसेण्ट्थियोसफिकल्महाविद्यालयस्य प्राचार्यस्य आह्वानेन आन्ध्रप्रदेशस्य चित्तूरुजनपदस्य मदनपल्लीम् आगतवान् आसीत् । सः प्राचार्यः आसीत् – ऐरिश्कविः जेम्स एच्. कासिन्सनामा ।

फेब्रवरीमासस्य प्रथमे दिनाङ्के सायं डा॰ कासिन्स् तस्य पत्नी मार्गरिट्, केचन छात्राः च बेङ्गालीगीतस्य गानं कर्तुं प्रार्थयन्त कविमहाशयम् । तस्य गीतस्य अन्तिमपङ्क्तिः यदा गीता तदनु एव सर्वे रोमाञ्चिताः सन्तः 'जय हे जय हे' इति ऐककण्ठ्येन अगायन् ।

मदनपल्ल्यां येषु दिवसेषु उषितं, तेषु एव दिनेषु अस्य गीतस्य आंग्लानुवादः कृतः तेन । तदनन्तरं कासिन्सः तस्य गीतस्य रागसंयोजनं कृतवान् । 'रवीन्द्रनाथठागोरमहोदयः भौगोलिकान् प्रदेशान्, पर्वतान्, नदीः च अधिकृत्य प्रथमे भागे, द्वितीये भागे च भारतीयानि मतानि अधिकृत्य च गीतवान् अस्ति' इति कासिन्सः उल्लिखितवान् स्वपुस्तके ।

१९४८ तमे वर्षे रक्तदुर्गे अगस्ट्मासस्य १५ दिनाङ्के प्रथमवारं जवहरलालनेहरू यदा राष्ट्रध्वजोद्घायनम् अकरोत् तदा सिखरेजिमेण्ट् तेनैव रागेण तत् गीतम् अगायत् यश्च रागः कासिन्सवर्येण संयोजितः आसीत् । तेनैव रागेण तत् गीतं गीयते अद्यापि ।



# निर्दोषेषु बन्धिषु दोषिणः उपस्थितिः

जर्मनीदेशस्य विलियम् I (1797-1888) प्रसिद्धः कश्चन शासकः अस्ति इतिहासे। तस्मिन् कतिचन गुणाः श्लाघ्याः आसन्। व्यवहारेण ऋजुः सः सरलं भाषते स्म। सत्यनिष्ठा अत्यन्तम् इष्टा आसीत् तस्य।

कदाचित् सः स्वस्य राज्यस्य पूर्वभागस्य पोस्टडामप्रदेशे विद्यमानं कारागारम् एकम् परिशीलयितुं गतवान्। तत्र कञ्चित् बन्धिनम् उद्दिश्य सः अपृच्छत् - ''भोः! भवान् किमर्थं कारावासदण्डम् अनुभवन् अस्ति?'' इति।

''प्रभो! कश्चित् चोरः भूस्वामिनः भवने चौर्यं कृत्वा पलायितवान्। आरक्षकाः तस्य अनुधावनं कृतवन्तः। तदा सः चोरः चोरितं सर्वं मम गृहावरणे क्षिप्त्वा पलायितवान्।



अन्याय्येन अहं बद्धः, शिक्षितः च अभवम्'' इति उक्तवान् सः बन्धी ।

सः पुनः ततः अग्रे गत्वा अपरं पृष्टवान् यथापूर्वम् । राज्ञा पृष्टेन तेन उक्तम् - ''अस्माकं स्थानीयः शासकः मयि अप्रसन्नः घृणावान् च आसीत् । कदाचित् अस्मत्प्रदेशीयाः तं विरुद्धय सङ्ग्रामम् अकुर्वन् । तस्य सङ्ग्रामस्य प्रधानप्रेरकः अहमेव इति मिथ्यारोपणं कृत्वा मां बद्ध्वा सः अत्र स्थापितवान्'' इति ।

तादृशमेव प्रश्नं तृतीयं बन्धिनम् उद्दिश्य राज्ञा यदा पृष्टं तदा सः बन्धी उक्तवान् - ''केनचित् लेखपत्राणि मिथ्यालेखनेन प्रदूषितानि । किन्तु शासनाधिकारिणः माम् एव तस्य दुष्कर्मणः कर्तारं भावयन्तः दण्डितवन्तः सन्ति'' इति ।

एवं क्रमेण एकैकशः पृच्छन् राजा अग्रे गतः । सर्वेषाम् उत्तरस्य सारः आसीत् - ते सर्वेऽपि बन्धिनः निर्दोषाः एव । मुग्धाः ते कारणान्तरेण बद्धाः अभवन् इति ।

अन्ते राज्ञा अन्तिमः बन्धी पृष्टः । तदा तेन अग्रे आगतेन विनम्रतया उक्तम् -''महाप्रभो ! मयि यत् दोषारोपणं कृतं तत्तु तथ्यमेव । यत् न कर्तव्यम् आसीत् तत् कृत्यम् अनुष्ठितं मया । तदर्थम् अहं लज्जे'' इति ।

एतत् श्रुत्वा राजा अवदत् - ''एतावत्सु मुग्धेषु निर्दोषेषु भवान् एकः एव दुष्टः जनः अस्ति । भवतः उपस्थित्या एते अपि दूषिताः न भवेयुः'' इति । तदनन्तरं सः तत्रत्यं न्यायाधीशं, काराधिकारिणं च आहूय आज्ञापयत् - ''एतं विमुच्य स्वच्छन्दं जीवितुम् अवसरं कल्पयन्तु'' इति ।

## चन्दमामाप्रश्नावली पञ्चमी (जून् - २००६)

**समुचितम् उत्तरं प्रेषितवत्याः संस्कृतावृतेः वाचिकायाः नाम अधोनिर्दिष्टम् । वाचकानां ज्ञानाय पञ्चम्याः प्रश्नावल्याः उत्तरम् अधः दत्तम् अस्ति । अन्ये अपि वाचकाः एतस्यां स्पर्धायां सोत्साहं भागं वहेयुः इति अस्माकम् अभ्यर्थना ।**

### कीर्ति वै.सि.

द्वारा - डा॰ चन्द्रशेखरः, मङ्गलदन्तचिकित्सालयः, वि.वि. मार्गः,
गणेशमन्दिरवीथी, **मण्ड्य - ५७१ ४०१ (कर्णा॰)**

### पञ्चम्याः चन्दमामाप्रश्नावल्याः उत्तराणि

१. लिपिविज्ञानम् । (ग्राफोलजी)
२. पौलेण्डदेशस्य कथायाम् । तस्य नाम व्लाडिमीरः इति ।
३. २४ ।
४. एन्.जे. कोण्टवर्येण - द्वित्रेभ्यः शतकेभ्यः पूर्वम् ।
५. चीनदेशीयैः ।
६. धर्मासनम् ।
७. स्थूलतायाः निवारणम् इत्यस्यां कथायाम् ।

# वार्ताविशेषः

## राजनैतिकजनानां कृते कक्ष्या



नूतना लोकसभा यदा रूपिता भवति तदा सर्वैः अपि सांसदैः शपथग्रहणानन्तरं संसदि भागः तु ग्रहणीयः एव, तेनैव सह दिग्दर्शन-समावेशे अपि तैः भागः ग्रहीतव्यः, लोकसभायां परिणामकारितया भागग्रहणस्य अवगमनाय । इतः स्फूर्तिं प्राप्तवता इव त्रिवेन्द्रस्थेन केरलविश्वविद्यालयेन एतस्मिन् शैक्षणिके वर्षे नूतनस्य पाठ्यक्रमस्य आरम्भः कृतः अस्ति । तस्य नाम - 'डिप्लोमा इन् प्रोफेशनल् पोलिटिकल् मेनेजमेण्ट्' इति । एषः ग्रामसमिति-पञ्चायत-स्थानीयसमितिप्रभृतीनां सदस्यानां कृते अस्ति । प्रतिकक्ष्यम् अत्र ४० जनाः प्रवेशम् अर्हन्ति । षट् मासान् यावत् प्रचलिष्यति एषा कक्ष्या ।

## कुटुम्बे सप्त डाक्टरेट्पदवीधारिणः

गृहे डाक्टरपदनिर्देश्यस्य उपस्थितिः लाभाय खलु भवति । यतः कस्यचित् अस्वास्थ्यं यदा भवति तदा चिकित्सार्थं धावनीयं न भवति । कर्णाटके बागलकोटजनपदे मुधोळग्रामे एकस्मिन् एव कुटुम्बे सप्त 'डाक्टर्'पदवीधराः सन्ति । किन्तु तेषु कोऽपि नास्ति औषधदानसमर्थः वैद्यः । यतः ते सर्वे 'डाक्टर्'(विद्यावारिधि)-पदवी-धारिणः । गृहस्वामिनः नाम रामण्णः इति । सः एकादशापत्योपेतः । तेषु त्रयः पुत्राः, चतस्रः पुत्र्यः च उच्चाध्ययनं कृत्वा 'डाक्टरेट्'- पदवीम् आसादितवन्तः । अतः तस्य कुटुम्बस्य नाम इदानीं गिन्नीस् पुस्तके उल्लिखितम् अस्ति ।



## नागाल्याण्ड्राज्यीया जानपदकथा

# मृत्युखातस्य अन्वेषणम्

मणिपुरस्य राजकुमारी मधुमती अनन्येन सौन्दर्येण वर्धमाना आसीत् । यद्यपि तस्याः पाणिग्रहणाय बहवः युवराजाः यतन्ते स्म, तथापि सा केनचित् कारणेन तान् सर्वान् निवारयति स्म ।

तस्याः मातापितरौ वात्सल्यवन्तौ अपि अस्याः एतादृशेन व्यवहारेण आश्चर्यं चिन्तां च प्राप्तवन्तौ – दौहित्रस्य मुग्धमुखस्य दर्शनात् पूर्वम् एव आवयोः इहलोकयात्रा समाप्ता भवेत् कदाचित् इति ।

अथ कदाचित् मधुमती मन्त्रिणः पुत्रे मानसिंहे अनुरक्ता जाता । मानसिंहः न केवलं सुन्दरः, अपि तु दयालुः शीलवान् च आसीत् । अतः मधुमत्याः मातापितरौ – 'एषः राजवंशीयः न' इति आक्षेपं न कृतवन्तौ । तौ आनन्देन एव एतं विवाहप्रस्तावम् अङ्गीकृतवन्तौ ।

विवाहदिनं निश्चितम् अभवत् । दिनत्रयं यावत् समग्रे राज्ये उत्सवे इव उत्साहः दृश्यते स्म ।

किन्तु तस्मिन् शुभावसरे काचित् अनूह्या घटना घटिता । विवाहात् पूर्वदिने धार्मिकस्नानार्थं नदीं प्रति गतवती राजकुमारी नैव प्रतिनिवृत्ता । तस्याः सख्यः विलपन्त्यः राजप्रासादं गत्वा सूचितवत्यः एतं विषयम् । तेन समग्रं राज्यं विषादमेघैः आच्छन्नम् अभवत् । मधुमत्याः पितरौ तं मानसिंहं सूचितवन्तौ यत् निश्चितात् विवाहमुहूर्तात् पूर्वं सा न आगता चेत् भवान् स्वगृहं गन्तुम् अर्हति इति । पुनः तयोः मनसि विचारः उत्पन्नः यत् तम् एव दत्तपुत्रत्वेन प्राप्य साम्राज्यस्य युवराजं करिष्यावः इति ।

किन्तु मानसिंहः एतत् न अङ्गीकृतवान् । सः तौ अवदत् – ''राजकुमारी मृत्युप्रपाते





पतिता अस्ति ! सा यत्र स्यात् तत् च स्थानम् अन्विष्य ताम् अहं प्रत्यानेष्यामि एव'' इति ।

तस्य कथनं श्रुत्वा नितराम् आश्चर्यचकितौ तौ - ''किं तादृशः प्रपातः कुत्रचित् भवितुम् अर्हति ? स्यात् चेदपि कश्चित् कथं तत्र गच्छेत् ? मृतः कश्चन जनः कथं वा प्रत्यागच्छेत् पुनरुज्जीवितः सन् ?'' इति सन्देहं प्रकटितवन्तौ ।

'तस्याः शरीरं कुत्रापि न प्राप्तम् इत्यतः निश्चितं यत् सा कुत्रचित् जीवन्ती एव भवेत् इति । प्रायः सा मृत्युप्रपाते एव स्यात् । अतः महता साहसेन वा तस्य स्थानस्य मार्गं ज्ञास्यामि एव' इति चिन्तितवान् मानसिंहः ।

'एतस्मिन् कार्ये सफलता भवतु भवतः' इति आशीर्वादं कृत्वा तं प्रेषितवन्तौ राजा राज्ञी च ।

तस्य प्रपातस्य मार्गान्वेषणम् एव प्रथमं लक्ष्यम् आसीत् मानसिंहस्य । एतस्मिन् विषये बहुभिः संन्यासिभिः, साधुभिः च सह चर्चां कृत्वा सः अनेकेषु स्थानेषु भ्रान्तवान् । वृद्धजनाः यदा पृष्टाः तदा ते करुणया तम् अपश्यन् । ''किमर्थं भवान् एतस्मिन् यौवनकाले एव मरणविषयं चिन्तयति ?'' इति अपृच्छन् ते ।

अन्ततो गत्वा मानसिंहः केनचित् महावृद्धेन मिलितः, यस्य दृष्टिः नितरां क्षीणा आसीत् । 'मृत्युप्रपातं प्रति गमनस्य कारणं किम् ?' इति अनुरोधपूर्वकं पृष्टवान् सः वृद्धः । अद्यपर्यन्तं तत्र गमनस्य उद्देशं कमपि न उक्तवान् आसीत् मानसिंहः ।

मानसिंहस्य व्यथागाथाम् श्रुत्वा सः वृद्धः उच्चैः अहसत् । ''अहं तत्र गमनस्य मार्गं न जानामि । किन्तु या तं मार्गं जानाति तादृश्याः वृद्धायाः समीपं कथं गन्तव्यम् इति तु वक्तुं शक्नोमि । तस्याः कियद्वार्द्धक्यम् इति तु न कोऽपि जानाति । किन्तु वयं मन्यामहे यत् सा द्विशतवर्षीया त्रिशतवर्षीया वा स्यात् इति । मृत्युप्रपातं प्रति कथं गन्तव्यम् इति सा अवश्यं जानाति । तत्र गमनात् पूर्वं बहुषु विषयेषु अवधानं भवेत् । बहुविधाः सन्नाहाः अपि करणीयाः भवन्ति । गमनमार्गे कापि स्त्री भवता न अवलोकनीया । स्त्रीभिः कृतः पाकः अपि भवता न भोक्तव्यः । एकचत्वारिंशत् दिनानि यावत् प्रत्यहं त्रिवारं स्नानं करणीयं, तस्यै वृद्धायै उपायनीकर्तुं कौशेयवस्त्रयुग्मं च नेतव्यम् । एतत् सर्वं विधाय शुद्धमनस्कः निर्मलहृदयः च सन् भवान् मम

समीपम् आगच्छेत् । तदा पर्वतपङ्क्तेः अपर-पार्श्वे स्थितायाः वृद्धायाः कुटीरं प्रति गमनाय मार्गम् अहं दर्शयिष्यामि'' इति अवदत् सः वृद्धः ।

'सर्वविधं सन्नाहं कृत्वा द्विचत्वारिंशत्तमे दिने अत्रैव भविष्यामि' इति प्रतिज्ञाय वृद्धस्य अनुज्ञां प्राप्य ततः निर्गतवान् मानसिंहः ।

तस्मिन् एकचत्वारिंशतः दिनानाम् अवधौ कयापि स्त्रिया न मिलितं तेन । दिने एकवारम् एव स्वयं पक्त्वा भुङ्क्ते स्म सः । स्नानं कृत्वा अहोरात्रं प्रार्थनया समयः याप्यते स्म तेन ।

यदा सः पुनः तस्य वृद्धस्य निकटं गतवान् तदा तेन तत्र तस्य कृते स्थापितानि स्यूत-शूल-कलश-खाद्यान्नादीनि दृष्टानि । वृद्धायाः कृते आनीतं वस्त्रयुग्मं तस्मै दर्शितवान् मान-सिंहः । वृद्धः मानसिंहं मृत्युखातं प्रति गमनस्य मार्गं सूचितवान् । मानसिंहः अनुक्षणं प्रस्थाय पर्वतश्रेणीं, घनारण्यानि, महाप्रपातान् च क्रान्त्वा अग्रे अगच्छत् । पर्वतादीनां क्रमणं कष्टाय न जातम् । किन्तु घोरारण्ये स्थिते प्रपाते सः दिग्भ्रान्तः जातः । वृद्धायाः कुटीरं प्रति गमनाय मार्गः कः इति ज्ञातुं न शक्तवान् सः ।

कतिपयानि दिनानि यावत् भ्रमणेन तेन काचन कुटी प्राप्ता । तत्र गत्वा द्वारम् उद्घाट्य सः अन्तः प्रविष्टवान् । तत्र तेन काचित् वृद्धा दृष्टा ।

तस्याः मुखे वयसः प्रतीकभूताः वलय-रेखाः आसन् । जराजर्जराणि तस्याः अङ्गानि शय्यायां निश्चेष्टानि दृश्यन्ते स्म । मानसिंहः स्यूतात् कौशेयवस्त्रं निष्कास्य तस्यै अर्पितवान् । अनुक्षणं वृद्धायाः मुखं सन्तोषेण प्रकाशमानं जातम् ।

सा तं पृष्टवती - ''वत्स ! मत्तः किम् अपेक्षते भवान् ?'' इति ।

''आर्ये ! अहं मृत्युप्रपातं प्रति गमनाय मार्गं ज्ञातुम् इच्छामि, तावदेव'' इति उक्तवान् मनसिंहः ।

''तावन्मात्रम् एव !!'' इत्येतं भावं दर्शयन्ती प्रश्नार्थकदृष्ट्या तम् अपश्यत् सा वृद्धा ।

''आम् ! मम प्रियया मधुमत्या मेलितुम् इच्छामि अहम् । सा राजप्रासादं प्रतिनेतव्या, यदि तस्याः अङ्गीकारः स्यात् तर्हि सा परि-णेतव्या च इति प्रबला इच्छा अस्ति मम''





इति अवदत् मानसिंहः ।

''सा मृत्युप्रपाते मिलेत् एव इति वक्तुं न शक्नोमि । किन्तु मृतात्मानः तत्र आगत्य चन्द्रिकायां विहरन्ति इति तु सत्यम् । भवता तत्र जागरूकेण भवितव्यम् । यदा सा दृश्येत तदा सा न स्प्रष्टव्या । किन्तु तया सह सम्भाषणं कर्तुं प्रयासः करणीयः । तस्याः उत्तरस्य प्रतीक्षा करणीया च'' इति उक्त्वा मृत्युप्रपातं प्रति गमनस्य मार्गं बोधयित्वा ''चन्द्रोदयानन्तरं कौमुदीप्रसारपर्यन्तं प्रतीक्षणीयम्'' इति सूचितवती वृद्धा ।

मानसिंहः सन्ध्याकालपर्यन्तं प्रतीक्षां कृत्वा अन्धकारप्रसारस्य अनन्तरं मृत्युप्रपातं प्रति प्रस्थितवान् । सर्वं स्पष्टं दृश्यते स्म । भाग्यवशात् सः कस्यापि क्रूरपशोः दृष्टिपथं न आगतः । तथापि वृद्धेन आत्मरक्षणाय दत्तं शूलं हस्तेन एव गृहीतवान् आसीत् सः । अकस्मात् तेन काश्चन आकृतयः अवलोकिताः, याः पुष्पसस्यानाम् उपरि मनोहरगत्या वलन्त्यः भ्रमन्त्यः आसन् । किन्तु तासु राजकुमार्याः अभिज्ञानं तस्य कष्टाय एव अभवत् । यदा सः राजकुमारीसदृशीम् आकृतिम् अपश्यत्, तदा गत्वा तस्याः हस्तं गृहीत्वा – ''राजकुमारि ! आगच्छतु भवती मया सह । भवतीं परिवारजनानां समीपं नेष्यासि'' इति उक्तवान् ।

किन्तु सा अस्पष्टा आकृतिः मन्दम् अदृश्या अभवत् । वराकः मानसिंहः किङ्कर्तव्यतामूढताम् अभजत । पुनः सा राजकुमारी तत्र न आगतवती ।

सूर्योदयपर्यन्तं सः तत्रैव प्रतीक्ष्य प्रातःकाले वृद्धायाः कुटीरं प्रति आगतवान् । वृद्धा सहनया प्रवृत्तं सर्वं श्रुत्वा बोधितवती – ''भवान् आदिनम् अत्रैव तिष्ठतु । रात्रौ पुनः तत्र गच्छतु, यत्र भवत्प्रियां प्राप्तुं गतरात्रौ भवान् गतवान् आसीत् । किन्तु यदा सा दृष्टिगोचरतां याति तदा तां स्प्रष्टुं प्रयासः भवता सर्वथा न करणीयः'' इति ।

आसायं विश्रान्तिं प्राप्य मानसिंहः पुनः तं प्रपातं प्रति अरण्यमार्गेण एव प्रस्थितवान् । किन्तु एतदवसरे तेन शूलं न स्वीकृतम् । यतः तस्य तर्कः आसीत् यत् शूलपाणिं मां सा मधुमती अभिज्ञातुं न शक्नुयात् इति ।

समये आसन्ने चन्द्रः कौमुदीं प्रवाहयन् उद्भूतः । मानसिंहः मृतात्मनाम् आकृतीनां साक्षात्करणाय प्रतीक्षारतः आसीत् । अचिरात् एव ताः आकृतयः तत्र आविर्भूताः । तासु मानसिंहः विनायासेन एव राजकुमारीम् अभिज्ञातवान् ।

सः श्रद्धया भगवन्तं प्रार्थितवान् - ''अयि, भगवन् ! मम एतां व्याकुलतां ज्ञात्वा भवान् कृपया राजकुमारी यथा मया सह भाषेत तथा करोतु'' इति ।

राजकुमारी दूरात् एव तम् अभिज्ञाय तं प्रति सत्वरं धावन्ती आगत्य अवदत् - ''मानसिंह ! माम् अन्विष्यन् किं भवान् अत्र आगतवान् ? कथम् अत्र प्राप्तं भवता ? भवान् अत्र सजीवम् आगतवान् इति तु महते आश्चर्याय एव'' इति ।

सा महता प्रेम्णा आदरेण च पुनः अवदत् - ''मानसिंह ! भवान् स्वीयेन मार्गेण अग्रे गच्छन् भवतु । किन्तु पृष्ठतः परिवृत्य न पश्येत् । पर्वतश्रेणी क्रान्ता चेत् तदग्रे समस्या न भविष्यति । अनन्तरं यदा भवन्तम् अहम् आकारयामि तदा भवान् परिवृत्य द्रष्टुम् अर्हति'' इति ।

'मयि मधुमत्याः महती प्रीतिः अस्ति' इति ज्ञातवान् मानसिंहः । अतः सः तस्याः वचने विश्वसितवान् ।

सः तस्मात् प्रपातात् प्रस्थितः । ततः प्रस्थाय पर्वतादिकम् अतिक्रान्तं तेन । ततः अग्रे यदा गतं तदा - 'मानसिंह !' इति माधुर्य-मिश्रितं सम्बोधनं तेन श्रुतम् । मानसिंहः परिवृत्य अपश्यत् । तत्र मोहकहासं विकिरन्ती मधुमती तेन दृष्टा ।

मानसिंहः धैर्येण तां हस्तयोः धृत्वा महता आनन्देन राजप्रासाददिशि तीव्रगत्या आगतः ।

पुनरुज्जीविता सती प्रत्यगतवतीं पुत्रीं मधुमतीं दृष्टवतोः राजदम्पत्योः तु महान् एव आनन्दः । विवाहसज्जतायाः अनुवर्तनाय आज्ञापितं राज्ञा । मानसिंहः अपि राज्ञः निर्णयम् अङ्गीकृतवान् ।

तौ उभौ अपि दम्पती सन्तौ हर्षपूर्णं जीवनं कृतवन्तौ ।

मृत्युप्रपातगमनं केन सूचितम्, केन मार्गेण तत्र गत्वा लक्ष्यं साधितम् इत्यादिकं मानसिंहः कमपि न उक्तवान् एव । अतः तत् रहस्यं तेन सह एव अवर्तत ।



# पञ्जरस्थः शुकः

रामचन्द्रः कृष्णपुरस्य भूस्वामिनः निकटे कार्यं करोति स्म । सः पत्न्या जानक्या, द्वाभ्याम् अपत्याभ्यां च सह सुखमयं जीवनं करोति स्म । पुत्रः मुरलिः एकादशवर्षीयः, पुत्री च दशवर्षीया । तयोः अतीववात्सल्यवान् सः सायं कार्यात् विरम्य गृहं प्रति आगमनावसरे मिष्टान्नं क्रीडनार्थं पाञ्चालिकां वा आनयति स्म ।

कदाचित् सः सकुटुम्बं श्वशुरगृहं गतवान् । तत्र प्रतिवर्षं किञ्चन महापर्व आचर्यते स्म । तदवसरे भागग्रहणाय तत्र गमनं भवति स्म रामचन्द्रस्य नियततया । मध्येमार्गं ते सर्वेऽपि विश्रान्त्यर्थं आम्रोद्याने उपविष्टवन्तः । तदा तत्रत्यस्य पक्षिसमूहस्य किलकिलरवेण बालौ नितरां मुग्धौ अभवताम् । तेषां कलरवम् इष्टवन्तौ तौ ।

ततः ते अग्रे गत्वा विपणिं प्रविष्टवन्तः । तदा मुरलिः कञ्चन शुकं ज्योतिषिकं च अपश्यत् । ज्योतिषिकस्य कथनमात्रेण सः शुकः पञ्जरात् बहिः आगत्य पत्रमेकम् उत्थाप्य तस्य हस्ते स्थापयति स्म । अनन्तरं तेन दत्तं बीजपूरं गृहीत्वा तूष्णीं पञ्जरं प्रविशति स्म । एतत् दृश्यं मुरलये नितराम् अरोचत । तादृशम् एकं शुकं दापयतु इति पितरं सानुरोधम् अपीडयत् सः ।

"पुत्र ! शुकः कश्चन स्वतन्त्रः पक्षी । पञ्जरे तस्य बन्धनम् अनुचितम् एव । तस्य स्वातन्त्र्यहरणं शोभावहं न" इति बहुधा तं समाश्वासयितुं प्रयत्नं कृतवान् । तथापि मुरलौ न कश्चित् परिणामः अलक्ष्यत । तस्य पीडा पराकाष्ठां गता । अतः कश्चन शुकः क्रेतव्यः एव अभवत् रामचन्द्रेण । सुन्दरे पञ्जरे तं शुकं बद्ध्वा आदिनं तेन सह क्रीडति स्म मुरलिः ।

कदाचित् मुरलिः ज्वरपीडितः अभवत् । दिनत्रयं यावत् उत्थातुम् अपि अशक्तः सः मञ्चे एव शयितः आसीत् । तस्य परीक्षणं कृतवता वैद्येन उक्तम् - "एषः कश्चन विषम-





ज्वरः । प्रतिदिनम् औषधं सेवनीयं नियततया । सप्ताहद्वयं सम्पूर्णा विश्रान्तिः स्वीकरणीया । तदवसरे एतेन मञ्चात् न अवतरणीयम् अपि । सूचना उपेक्ष्यते चेत् ज्वरः अधिकः भवेत् । ततः दीर्घकालं यावत् कष्टम् अनुभोक्तव्यं भवेत्'' इति ।



एतेन कारणेन सप्ताहद्वयं मञ्चे एव शयितः आसीत् मुरलिः । औषध-स्वीकरणम् आदिनं शयनं च महते क्लेशाय भवति स्म । हस्तपादादीनां बन्धनं कृतम् इव अनुभवं प्राप्नोति स्म सः । क्रमशः ज्वरः उपशान्तः । तथापि तस्य बहिः गमनं क्रीडनं वा मातापितरौ न अनुमन्येते स्म । आनन्देन क्रीडतः बालान् वातायनेन एव पश्यति स्म सः । अस्य तु क्रीडनेच्छा महती आसीत् । तथापि वराकः अनन्यगतिकः सः विवशतां धिक्कुर्वन् अश्रूणि मुञ्चति स्म ।

तेन पालितः शुकः पञ्जरे एव तिष्ठन् मात्रा दत्तं धान्यं खादन् अन्तः एव इतस्ततः भ्रमति स्म । सः शुकः सन्तुष्टः न अभासत । विवशताम् आप्तवतः शुकस्य स्थितिः अपि दुःखदायिनी आसीत् ।

मुरलेः स्वास्थ्यम् इदानीं समीचीनं जातम् । वैद्यः तम् अवदत् - ''भवान् बहिर्गत्वा भ्रमणं क्रीडनं च कर्तुम् अर्हति'' इति । माता तस्मिन् दिने उष्णजलेन तं स्नापयित्वा, वस्त्राणि च धारयित्वा उक्तवती - ''गच्छ । मित्रैः सह क्रीड'' इति ।

मुरलिः पञ्जरं गृहीत्वा अङ्गणम् आगत्य पञ्जरस्य द्वारम् उद्घाट्य उक्तवान् - '''पक्षं यावत् इतस्ततः कम्पनं विना मञ्चे शयितः आसम् । मम तु तत् कारागारदण्डनम् एव आसीत् । ततः मया ज्ञातं यत् बन्धनेन कियत् कष्टं भवेत् इति । भवतः विषये मया अनुचितः व्यवहारः कृतः । इदानीं गच्छ । पूर्णस्वतन्त्रः सन् यथेच्छं डयस्व'' इति ।

सः शुकः कलरवं कुर्वन् ततः उड्डीय गतवान् । तस्य मुखे आनन्दः विलसति स्म ।

– ***श्रीनिधिः, लखनऊ***



पुत्री – पितः ! मया रूप्यकनाणकम् एकं गीर्णम्, त्वरितं मां वैद्यसमीपं नयतु ।

पिता – वत्से ! अलम् उद्वेगेन । भवती तत्र नीयेत चेत् सः वैद्यः शतं रूप्यकाणि गिलेत् ।

**– एम्.आर्.गेशकुमारः, निकनिन्नावर्**



# विलक्षणः स्वप्नः

शिवः पञ्चविंशतिवर्षीयः अशिक्षितः युवकः । सर्वेषु अपि जीविषु अधिकप्रीतिमान् आसीत् सः । सः अजापुत्रान् उन्नीय लालयति स्म, प्रीत्या आलिङ्ग्य चुम्बति स्म च । ग्रामस्थैः शुनकैः सह धावति स्म सः । गृहे दृष्टान् मूषकान् गृहीत्वा ग्रामात् बहिः परित्यज्य आगच्छति स्म । कमपि पशुं न पीडयति स्म सः ।

चम्पकः तस्यैव ग्रामस्य निवासी क्षीरविक्रेता । नीलवेणी तस्य एका एव पुत्री । तस्यां शिवस्य विशेषप्रीतिः आसीत् । कदाचित् सः ग्रामात् बहिः निम्बवृक्षस्य अधः उपविश्य मन्दस्वरेण किमपि गायन् आसीत् । तावता नीलवेणी तत्र आगता ।

समीपे अन्यः कोऽपि न आसीत् । अतः शिवः आत्मनि धैर्यं प्रपूर्य ताम् अवदत् - ''अहं भवतीं परिणेतुम् इच्छामि । किं भवत्याः एतत् सम्मतम् ?'' इति ।

''एतद्विषये भवता मम पिता प्रष्टव्यः'' इति सलज्जम् उक्त्वा हसन्ती ततः गतवती नीलवेणी ।

तस्याः व्यवहारेण एव शिवः अवगतवान् यत् अयं प्रस्तावः एतस्याः प्रियः एव इति । तस्मात् सः चम्पकं दृष्ट्वा स्वस्य इच्छां तस्य पुरतः उपस्थापितवान् ।

सर्वं श्रुत्वा नितरां क्रुद्धः चम्पकः उच्चस्वरेण अवदत् - ''भवान् सर्वथा अशिक्षितः । कोऽपि उद्योगः अपि नास्ति भवतः । मूषकगोधिकादीनां ग्रहणेन कालः याप्यते भवता । एतादृशाय भवते को वा स्वस्य पुत्रीं दद्यात् ? गच्छ, गच्छ इतः'' इति ।

एतस्मात् शिवः नितरां लज्जितः जातः । 'चम्पकस्य वचनं युक्तम् अस्ति । योग्योद्योगरहितः अहं पत्न्याः पोषणं कथं कुर्याम् ? उद्योगरहितः लोके सुखेन स्थातुं नार्हति' इति चिन्तयन् ततः प्रत्यागतः शिवः खेदेन एव

सुप्तवान् । निद्रां गतेन तेन कश्चन विलक्षणः स्वप्नः दृष्टः ।

तत्र सः समुद्रे आत्मानं पतितम् अपश्यत् । अपरः कश्चन दीर्घकेशी जले मज्जन् आसीत् । तावता समुद्रे उद्गतः महातरङ्गः कश्चन तौ तीरं प्रति अनयत् । सः दीर्घकेशी कस्मिंश्चित् गर्ते अपतत् । शिवः च सिकताराशेः उपरि अपतत् ।

अनन्तरक्षणे एव शिवेन जागरणं प्राप्तम् । एतस्य स्वप्नस्य किं तात्पर्यम् इति न अवगतं तेन । ग्रामीणाः अवदन् यत् अरण्ये गुहायां स्थितः महात्मा एकः एव एतादृशानां स्वप्नानां फलं वक्तुं समर्थः इति ।

स्वस्य विलक्षणस्य स्वप्नस्य फलं ज्ञातुम् इच्छन् शिवः तस्मिन् एव दिने अरण्यं प्रति प्रस्थितवान् ।

अरण्ये तेन कश्चन अस्पष्टः मार्गः दृष्टः । सः तमेव मार्गम् अनुसरन् अग्रे अगच्छत् । तावता महती वृष्टिः आरब्धा । शिवः समीपस्थं किञ्चन जीर्णदेवालयं प्रविष्टवान् । घोरः अन्धकारः सर्वत्र प्रसृतः दृश्यते स्म ।

किञ्चिदनन्तरं तत्र कश्चन वृषभशकटः आगतः । तस्य दर्शनात् शिवे धैर्यम् उत्पन्नम् । सः शकटसमीपम् अगच्छत् । चालकस्थाने तत्र कोऽपि न दृष्टः तेन । सः पृष्ठभागे दृष्टिं प्रसारितवान् । कश्चन शयितः दृष्टः तेन । दर्शनमात्रेण शिवः अवगतवान् यत् एषः रोगमूर्च्छितः अस्ति इति । महान् ज्वरः तं बाधते स्म । स्पर्शमात्रेण शिवः एतत् अवगतवान् । 'यदि योग्या चिकित्सा न क्रियेत तर्हि एतस्य मरणं सम्भवेत् अपि' इति विचिन्त्य



शिवः शकटम् आरुह्य तं राजधानीं प्रति अनयत् ।

यावत् राजधानी प्राप्ता तावता सूर्योदयः जातः आसीत् । सः शकटं स्थगयित्वा समीपस्थं सैनिकम् अपृच्छत् - ''महाशय ! किम् अत्र समीपे कोऽपि वैद्यः अस्ति ?'' इति ।

तं सन्देहेन पश्यन् सः सैनिकः - ''कः भवान् ?'' इति पृच्छन् एव शकटे दृष्टिं प्रसारितवान् ।

तदनन्तरक्षणे एव तस्य मुखात् आश्चर्यपूर्णः ध्वनिः निर्गतः - ''अहो ! एषः तु महाचोरः लाटरामः'' इति ।

एतं ध्वनिं श्रुत्वा अन्ये अपि सैनिकाः तत्र आगताः । ते लाटरामं बद्धवन्तः । शकटे यदा अन्वेषणं कृतं तदा काचित् पेटिका प्राप्ता



तैः । तस्यां सुवर्णमुद्राः, बहूनि आभरणानि च आसन् ।

''भवान् एतस्य महाचोरस्य अनुचरः इति भाति'' इति वदन्तः ते सैनिकाः शिवं गले गृहीतवन्तः ।

शिवः भीत्या कम्पमानः दैन्येन तान् अवदत् - ''मान्याः ! अहं न हि चोरः । यदि चौर्य-प्रवृत्तिः मम स्यात् तर्हि किमर्थम् अहं भवतां समीपम् आगच्छेयम् ? ह्यः रात्रौ मया कश्चन विलक्षणः स्वप्नः दृष्टः । तस्य फलं ज्ञातुम् अहं पर्वतस्थस्य संन्यासिनः समीपं गच्छन् आसम् । मध्येमार्गं मया शकटे अयं दृष्टः । चिकित्सार्थम् अयम् अत्र आनीतः मया । एषा वस्तुस्थितिः'' इति ।

तदा तं गृहीतवान् सैनिकः अवदत् - ''भोः, अहमपि तस्य संन्यासिनः भक्तः एव अस्मि । प्रत्यमावास्यम् अहं तस्य दर्शनं करोमि अपि । किन्तु सैनिकानाम् अस्माकं कर्तव्यं भवति यत् भवान् राजसमीपं नेतव्यः इति । राजा एव निर्णयं कुर्यात् यत् भवान् चोरस्य अनुचरः उत संन्यासिनः भक्तः इति'' इति ।

ततः तैः सैनिकैः शिवः महाराजसमीपं नीतः । सैनिकाः महाराजं प्रवृत्तं सर्वं निवेदितवन्तः । सर्वं श्रुत्वा राजा शिवम् अवदत् - ''किं भवान् महाचोरस्य लाटरामस्य अनुचरः न ? सत्यं वदतु तावत्'' इति ।

शिवः करौ योजयित्वा - ''अहं लाटरामस्य अनुचरः न'' इति वदन् स्वप्नदर्शनं, संन्यासिनः दर्शनाय स्वस्य गमनं च राजानम् अवदत् ।

राजा मन्दहासं प्रकटयन् राजगुरोः मुखम् अपश्यत् । तदा राजगुरुः शिवम् उद्दिश्य - ''स्वप्ने दृष्टस्य दीर्घकेशिनः रक्षणाय गतः भवान् जलात् निर्गतः मीनः इव दुर्गतिं प्राप्तवान्'' इति उक्त्वा राजानम् अवदत् - ''प्रभो ! एषः दोषभाक् न । क्षमाम् अर्हति एषः'' इति ।

तदा कृतज्ञतापूर्वकं शिवः राजगुरुम् अवदत् - ''आर्य ! अनेके धन्यवादाः । संन्यासिनः दर्शनस्य आवश्यकता निवारिता भवता । भवत्कथनात् मया स्वप्नस्य तात्पर्यं ज्ञातम् एव'' इति ।

अत्रान्तरे पार्श्वप्रकोष्ठतः द्वादशवर्षीया राजकुमारी उच्चैः आक्रोशन्ती वेणीं चालयन्ती तत्र आगता । तस्याः वेण्यां काचित् गोधिका आसीत् । अतः सा नितरां भीता आसीत् ।

शिवः ताम् अपश्यत् । सः झटिति अग्रे गत्वा गोधिकाम् अङ्गुलीभिः गृहीत्वा प्रासादभित्तेः अपरस्मिन् पार्श्वे अक्षिपत् ।

''महासाहसी भवान् । किं गोधिकातः भीतिः नास्ति भवतः ?'' इति तम् अपृच्छत् राजकुमारी ।

तदा शिवः विनयेन अवदत् - ''अस्माकं ग्रामे यस्यकस्यचिदपि गृहे गोधिकामूषकादयः दृष्टाः चेत् अहं तान् गृहीत्वा ग्रामात् बहिः परित्यज्य आगच्छामि । अतः तेभ्यः न कापि भीतिः मम । अन्यच्च गोधिकादीनां जन्तूनां मारणं पापाय इत्यत्र अस्ति मम बलीयान् विश्वासः'' इति ।

एतत् श्रुत्वा महाराजः प्रसन्नमुद्रया शिवम् अवदत् - ''राजभवने अपि गोधिकादयः भवन्ति, तेषां पीडा अपि अस्ति एव अस्माकम् । तेषां निवारणकार्यं भवते ददामि । यथायोग्यं वेतनम् अपि ददामि । किम् एतत् अनुमन्येत भवान् ?'' इति ।

''महाराज ! तथा चेत् महती कृपा दर्शिता भवेत् । अन्धः किम् इच्छति ? नेत्रद्वयप्राप्तिम् एव महते सौभाग्याय भावयति सः । जन्तूनां ग्रहणात् ऋते अन्यत् किमपि कार्यं न जानामि अहम् । भवतः कृपया मम जीवनं सुखमयं भवेत्'' इति अवदत् शिवः ।

एवं शिवेन राजास्थाने उद्योगः प्राप्तः । एतां वार्तां श्रुत्वा सन्तुष्टः चम्पकः स्वपुत्रीं नीलवेणीं तस्मै दत्त्वा विवाहं निर्वर्तितवान् ।



# उद्बन्धकरज्जोः मूल्यं दातव्यं भवता

रत्नाकरः यदा देवपुरग्रामम् आगतवान् तदा तु अकिञ्चनः एव आसीत् । किन्तु अद्य महाधनिकेषु अन्यतमः सः । अहोरात्रं परिश्रमः यः कृतः तस्यैव फलम् एतत् इति सदा वदन् भवति स्म सः । किन्तु ग्रामीणाः तद्विषये वदन्ति स्म यत् सः महाकृपणः, निर्धनानां रक्तं पीत्वा एतत् धनं सम्पादितं तेन इति । प्रयोजनरहितः वृक्ष इव सः इति तेषां निर्णयः आसीत् ।

कदाचित् देवपुरपरिसरे समीचीना वृष्टिः जाता । धान्यानां मूल्यम् अपि यथायोग्यं प्राप्तं कृषिकैः । अतः सर्वे कृषिकाः यथासमयं धान्यानि विक्रीय धनं प्राप्तवन्तः । किन्तु रत्नाकरः तथा न कृतवान् । इतोऽपि अधिकं मूल्यं प्राप्येत इति विचिन्त्य सः धान्यं गृहे एव रक्षितवान् ।

किन्तु दिनानि यथा यथा गतानि तथा तथा धान्यानां मूल्ये महान् ह्रासः एव जातः । एतस्मात् रत्नाकरः धैर्यच्युतः जातः । सम्भाव्यां हानिं मनसि आकलय्य सः नितरां दिग्भ्रान्तः । अतः सः आत्महत्यां सङ्कल्प्य धेनुबन्धनरज्जुं गृहीत्वा ग्रामात् बहिः गत्वा वृक्षे आत्मनः उद्बन्धनं कृतवान् । तावता तत्र आगतः देवदासः नाम कश्चन सेवकः एतत् दृष्ट्वा झटिति अग्रे गत्वा रज्जुं लवित्रेण छिन्नवान् । रत्नाकरं भूमौ शाययित्वा तस्य मुखस्य उपरि जलसेचनं कृतवान् । नेत्रे उन्मीलितवान् रत्नाकरः परितः सकृत् दृष्ट्वा पार्श्वस्थं देवदासम् अवदत् - ''भोः, मया भावितम् आसीत् यत् एषा सामान्या रज्जुः इति । एषा तु अधिकमूल्या रज्जुः । एषा छेदिता भवता । तस्मात् एतस्याः मूल्यं दातव्यम् एव । अन्यथा अहं भवन्तं कारागारं प्रति प्रेषयिष्यामि'' इति ।





# स्वामिहिताय

शेखरः बलिपुरस्य निवासी । सः यदा दशवर्णीयः आसीत् तदा एव तस्य मातापित्रोः दिवङ्गतिः अभवत् । अतः तस्य मातुलः योगेशः तं स्वगृहं नीतवान् । तस्य पालनपोषणं वर्धनं च मातुलानी रोहिणी न इच्छति स्म । अतः गृहस्य सर्वविधानि अपि कार्याणि तेन करणीयानि आपतन् । केनापि व्याजेन तस्य कार्ये सा दोषं दर्शयन्ती तर्जयति स्म । तस्य प्रतिक्रियारूपेण शेखरः किमपि अनुक्त्वा एव सर्वं सहमानः कार्याणि निर्वहति स्म ।

एतस्य एतादृशव्यवहारेण सा नितरां क्रुद्धा भवति स्म । एतद्विषये यदा योगेशः ताम् अभर्त्सयत तदा सा अवदत् - ''निष्कारणं भवान् मयि शङ्कते । स्वपुत्रे मम यावती प्रीतिः ततोऽप्यधिका प्रीतिः भवतः भागिनेये अस्ति । प्रीत्या एव तस्य संरक्षणं करोमि अहम् । अपेक्षते चेत् तस्य एव मुखात् भवान् वस्तुस्थितिं श्रोतुम् अर्हति'' इति ।

''शेखरः तु मुग्धः । भवत्याः नितरां बिभेति सः । अतः अधुना तम् आहूय अहं पृच्छामि चेदपि सः किमपि न वदेत् । तस्य साधुत्वं दृष्ट्वा वा तद्विषये उत्तमः व्यवहारः क्रियताम्'' इति अवदत् योगेशः ।

एतत् श्रुत्वा रोहिणी खिन्नतां प्राप्य उक्तवती - ''भवतः भागिनेयः सः वस्तुतः अपि मुग्धः अस्ति चेत् तं सीतारामस्य गृहं प्रति प्रेषयतु । अहम् अपि द्रक्ष्यामि - सः तत्र कति दिवसान् कार्यं कुर्यात् इति'' इति ।

''यावत् अहं जीवामि तावत् तम् अहं कस्यचित् अन्यस्य गृहं प्रति न प्रेषयिष्यामि । मुग्धं बालम् अन्यत्र प्रेषयितुम् इच्छन्ती भवती महिला, उत पिशाची इति न ज्ञायते मया'' इति विषादेन अवदत् योगेशः ।

शेखरः तयोः मध्ये प्रवर्तमानं कलहं पश्यन् आसीत् । सः अग्रे आगत्य - ''मातुल ! एषा



मां क्लेशयति इति भवन्तं कदापि अहं न उक्तवान् । अतः कृपया एतस्मिन् विषये कलहः मास्तु । भवता कथिते सत्यांशः अस्ति इति निरूपणं तु मम कर्तव्यं भवति । अहं मुग्धः, शान्तस्वभावः च इति प्रमाणीकर्तुं मया सीतारामनिकटे उद्योगः करणीयः । एवं करणेन न कापि त्रुटिः'' इति ।

योगेशस्य मनसि अपि अभासत यत् सीतारामनिकटे स्थितितः एतस्य प्रगतिः एव भवेत् इति । अतः सः एतं प्रस्तावम् अङ्गीकृतवान् । ततः शेखरः सीतारामस्य गृहं प्रविष्टवान् कर्मकरत्वेन ।

सीतारामः शिवपुरस्य प्रसिद्धः वणिक् । उत्कृष्टं व्यवहारपाटवं तेन प्राप्तम् आसीत् । तस्य पत्नी अरुन्धती गुणवती इत्यतः सर्वे पुत्राः स्नुषाः च अविभक्ताः सन्तः निवसन्ति स्म । बहवः ग्रामजनाः स्वगृहसमस्यायाः परिहाराय तस्य निकटम् आगच्छन्ति स्म । एतेन गर्वानुभूतिः तस्मिन् भवति स्म ।

गच्छता कालेन जराप्रवाहे पतिते तस्मिन् वाणिज्यनिर्वहणसामर्थ्यं न्यूनं जातम् । अतः तस्य पुत्राः एव दायित्वं निर्वहन्तः पितुः विश्रामाय अवसरम् अकल्पयन् । एतत् यदा जनैः ज्ञातं तदा समस्यापरिहाराय आगच्छतां संख्यायां क्रमशः ह्रासः अजायत ।

सीतारामस्य शङ्का उत्पन्ना यत् सर्वे मम उपेक्षां कुर्वन्तः सन्ति इति । वार्धक्यकारणात् तदीया सहनाप्रवृत्तिः विनष्टा । अतः क्षुद्रं विषयम् अधिकृत्य अपि सः कोपं प्रकटयति स्म, खिन्नः च भवति स्म । तस्य एतादृशं स्वभावं सोढुम् अशक्ता अरुन्धती तस्य संरक्षणदायित्वं पुत्रेभ्यः अर्पितवती । पुत्राः स्नुषाः, पौत्राः, पौत्र्यः च पर्यायक्रमेण सीतारामस्य संरक्षणभारं वहन्ति स्म । ते महाजागरूकतया तस्य अपेक्षानुगुणं व्यवस्थाः कुर्वन्ति स्म । तथापि तेषां व्यवहारे यत्किञ्चित् दोषं दर्शयित्वा खिन्नः भूत्वा कोलाहलम् एव करोति स्म सीतारामः ।

कदाचित् तस्य गृहं प्रति ज्येष्ठस्नुषायाः पितामहः नरसिंहः आगतवान् । पतिः कथं प्रतिविषयं समस्याम् उत्पादयति इति तं विस्तरेण अवदत् सीतारामस्य पत्नी अरुन्धती । एतत् श्रुत्वा नरसिंहः दुःखितः अभवत् ।

ततः सः सहासम् अवदत् – ''कतिपयेभ्यः वर्षेभ्यः पूर्वं मया अपि इयमेव समस्या सम्मुखीक्रियमाणा आसीत् । तदा मम पुत्रैः कश्चन बाह्यः जनः नियुक्तः मम संरक्षणाय । तदनन्तरं

मम गृहे कोऽपि क्लेशः न उत्पन्नः'' इति ।

अरुन्धती सत्वरमेव नरसिंहस्य सूचनायाः अनुष्ठाने मग्ना जाता । किन्तु सीतारामाय एतादृशी व्यवस्था न अरोचत । सः अचिन्तयत् – 'गृहजनाः मयि उपेक्षावन्तः जाताः सन्ति । अतः एव मम सेवायै कस्यचित् कर्मकरस्य व्यवस्था क्रियमाणा अस्ति' इति । अतः सः कर्मकरेषु स्वस्य असन्तोषं प्रदर्शयति स्म । अनेन कारणेन कोऽपि जनः तस्य निकटे दशाधिकदिनानि न तिष्ठति स्म । एतादृश्यां स्थितौ शेखरः सीतारामस्य सेवायै नियुक्तः अभवत् । तेन गृहजनाः सर्वे सन्तुष्टाः अभवन् ।




शेखरः महता आदरेण सीतारामस्य आवश्यकताः परिशील्य ताः पूरयति स्म । किन्तु सीतारामः तादृशे अपि कार्ये कमपि दोषं पश्यति स्म । तेन बहुधा दोषः प्रदर्शितः चेदपि शेखरः तु सहासं तूष्णीं भवति स्म । एतेन सीतारामस्य कोपः इतोऽपि वृद्धिं गच्छति स्म । एवं मास-त्रयम् अतीतम् । शेखरस्य सहनाविषये आश्चर्यं प्रकटयन् सीतारामः कदाचित् अपृच्छत् – ''अहं बहुधा तर्जयामि चेदपि भवान् इतः निर्गमनचिन्तनं किमर्थं न कृतवान् एव ?'' इति ।

तदा शेखरः मन्दहासपूर्वकम् अवदत् – ''अस्मिन् गृहे सर्वे अपि समीचीनाः । अत्र आकण्ठं भोजनं कृत्वा अहं निश्चिन्ततया निद्रामि । एवं सति भवादृशः ज्येष्ठः तर्जयति इत्येतावन्मात्रेण दुःखं किमर्थं करणीयं मया ? उक्तिः अपि काचित् अस्ति यत् महतां शापोऽपि वरायते इति । अतः इतः गमनस्य चिन्तनम् एव नास्ति मम'' इति ।

शेखरस्य एतादृशं चिन्तनं ज्ञातवतः तस्मिन् प्रेम उत्पन्नं सीतारामस्य । तथापि सः गृहात् निष्कासनीयः इत्येषः तदीयः सङ्कल्पः तु न अपगतः ।

अथ कदाचित् तत् गृहं प्रति कश्चन संन्यासी आगत्य भिक्षासत्कारादिकं प्राप्य सन्तुष्टः सन् सीतारामम् अवदत् – ''भवद्गृहे सर्वे उत्तमाः सन्ति । अतः गृहसदस्येषु एकैकोऽपि क्रमशः पृच्छतु – आत्मने किम् आवश्यकम् इति । यस्य इच्छा न्याययुता भवति तस्य इच्छाम् अवश्यं पूरयिष्यामि अहम्'' इति ।

सीतारामस्य पुत्रस्नुषादिभिः वाणिज्ये वृद्धिः इष्टा । पौत्रादयः विद्याभ्यासे उन्नतिम् इष्टवन्तः । अरुन्धत्या चिरमङ्गलसौभाग्यं प्रार्थितम् । किन्तु सीतारामः ऐच्छत् – 'गृहजनाः

एव मम सेवां कुर्युः' इति ।

'तथास्तु' इति संन्यासिना प्रोक्तम् । सीतारामः शेखरम् आहूय संन्यासिनम् अवदत् - ''एषः केभ्यश्चित् दिनेभ्यः तावत् अत्रैव कार्यं करोति । अतः एतम् अपि अस्मद्गृहजनं मत्वा अस्य अपि इच्छा भवता पूरणीया कृपया'' इति ।

सीतारामस्य चिन्तनम् आसीत् यत् एषः स्वस्य उज्ज्वलं भविष्यं प्रार्थयेत, गृहात् बहिर्गच्छेत्, तदनन्तरं गृहजनाः पर्यायेण मम सेवां कुर्युः इति । किन्तु सर्वथा अन्या एव आसीत् शेखरस्य अपेक्षा । तेन प्रार्थितम् - 'मम स्वामिने शान्तिं, सहनाशक्तिं, दीर्घम् आयुः च ददातु' इति ।

'तथास्तु' इति उक्त्वा सः संन्यासी तम् अपृच्छत् - ''भवान् यदि अपेक्षेत तर्हि अहं भवन्तं भाग्यवन्तम् अकरिष्यम् । दास्यजीवनात् मुक्तमपि अकरिष्यम् । तत् सर्वं विहाय एतादृशः वरः किमर्थं प्रार्थितः भवता ?'' इति ।

''भगवन् ! अस्य परिवारस्य प्रत्येकं जनः अपि सज्जनः । अतः एव एतेषाम् इच्छानां पूरणाय इच्छा कृता भवता । सीतारामवर्यः गृहजनान् यथा तथा माम् अपि भर्त्सयति । किन्तु सामान्ये अपि विषये खेदम् अनुभवन् तर्जयन् च सः अस्वस्थः भवति । तस्मात् भीताः गृहसदस्याः सर्वेऽपि ततः दूरे तिष्ठन्ति । इदानीम् अहं किञ्चित्प्रमाणेन सहमानः अस्मि । किन्तु मम अपि सहनाशक्तेः परिमितिः अस्ति । अहमपि तं त्यक्ष्यामि चेत् तस्य सेवायै अपरः न प्राप्येत । मया अन्येन केनचित् वा तस्य शुश्रूषा तु करणीया एव । अतः एव तस्मिन् सहनाशक्तिः शान्तिः च भवतु इति प्रार्थितं मया'' इति उक्तं शेखरेण ।

तस्य वचनानि श्रुत्वा नितरां सन्तुष्टः सीतारामः अवदत् - ''मद्विषये एतावत् चिन्तयन् भवान् कथं परकीयः भवेत् ? अद्य आरभ्य अस्माकं गृहस्य सदस्येषु अन्यतमः भवान् । भवता सेवा कृता चेत् मम गृहजनैः एव सेवा कृता इव'' इति ।

ततः आरभ्य शेखरः सीतारामस्य गृहस्य सदस्येषु अन्यतमः अभवत् । तदीयया निर्मलया सेवया सीतारामः अपि शान्तिमान् मधुरस्वभाववान् च जातः ।



# चन्दमामाप्रश्नावली - ७



यः समुचितम् उत्तरं दास्यति सः अर्हति रू.२५० - पारितोषिकत्वेन*

अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आम्, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

एवं क्रियतां भवद्भिः - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतः (पिन्कोड्सहितः) च प्रेषणीयम् । ३. एकस्य कुटुम्बस्य एकः एव सदस्यः अत्र भागं वोढुम् अर्हः । ४. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या लिख्यताम् । ५. पिहितपत्रस्य उपरि चन्दमामाप्रश्नावली - ७ इति लेखनीयम् । ६. अगस्त्समाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ७. अक्टोबर्मासे परिणामः प्रकाशयिष्यते ।

१. ६२ शिवभक्तेषु (नायन्मारेषु) अन्यतमा अस्ति काचित् । तस्याः नाम किम् ?

२. तस्याः जातककथायाः नाम किं, यस्यां च प्रतिपादितम् अस्ति यत् धर्मे श्रद्धा एव उत्तमः धर्मः इति ?

३. शरीरस्य रसक्रियागारम् इति निर्दिश्यमानं मानवस्य अङ्गं किम् ?

४. प्रतिवर्षं सप्टम्बरमासस्य पञ्चमः दिनाङ्कः अध्यापक-दिनत्वेन आचर्यते । तत् कस्य जन्मदिनम् ?

५. ५५० वर्षेभ्यः पूर्वम् उत्पन्नस्य कस्यचन वटवृक्षस्य नाम गिन्नीस्पुस्तके उल्लिखितम् अस्ति । सः वृक्षः आन्ध्रप्रदेशे कुत्र अस्ति ?

६. शिवाजीजीवने अत्यधिकं प्रभावं जनितवन्तौ कौ ?

७. २००२ तमे वर्षे कः दक्षिणभारतीयः कृतिकारः ज्ञानपीठप्रशस्तिं लब्धवान् ?

८. एतत् चित्रं कस्याः कथायाः ?





# विचित्रा जन्मकुण्डली

कलिङ्गराज्ये विद्यमानेषु नगरेषु दान्तिपुरं सुन्दरम् आसीत् । तस्य नगरस्य राजा आसीत् कलिङ्गः । तस्य ज्येष्ठकलिङ्गः कनिष्ठकलिङ्गः इत्येतौ पुत्रौ आस्ताम् ।

तयोः जन्मनक्षत्राद्याधारेण ज्योतिषिकाः अवदन् - ''राज्ञि सिंहासनात् अवतीर्णे सति ज्येष्ठपुत्रः ज्येष्ठकलिङ्गः एव सिंहासनम् अधिस्थास्यति । किन्तु कनिष्ठस्य भविष्यं विचित्रम् अद्वितीयं च । सः संन्यासिजीवनं करिष्यति । अस्य पुत्रः तु राजा भविष्यति'' इति ।

ततः अल्पे एव काले राजा कलिङ्गः स्वर्गं गतः । तस्मात् ज्येष्ठकलिङ्गः सिंहासने अभिषिक्तः जातः । कनिष्ठकलिङ्गस्य कृते राजप्रतिनिधित्वपदं व्यवस्थापितम् । किन्तु सः स्मरति स्म यत् जनिष्यमाणः मम पुत्रः महाराजः भविष्यति इति । अतः सः ज्येष्ठस्य आदेशानां पालनम् अकुर्वन् स्वच्छन्दं व्यव-हारम् आरब्धवान् । तदीयेन एतादृशेन व्यवहारेण उभयोः भ्रात्रोः मध्ये शीतलस्य समरस्य उद्भवः जातः । तस्य परिणामतः कनिष्ठं बन्धिनं कर्तुम् आदिशत् राजा ।

तदीये मन्त्रिगणे बोधिसत्त्वो नाम कश्चन मन्त्री आसीत् । सः वयसा अनुभवेन च ज्येष्ठः आसीत् । वार्धक्यदशायां स्थितः अपि सः दक्षतया कार्यं निर्वहति स्म । राजपरिवारस्य हितचिन्तकः सः राजादेशं कनिष्ठम् असूचयत् । अनेन अपमानितः कनिष्ठः तं मन्त्रिणम् अवदत् - ''महाशय ! भवान् सर्वथा मम हितैषी । ज्योतिषिकाणां भविष्यवाणी श्रुता अस्ति भवता अपि । यदि तत् सत्यम् एव भवेत् तर्हि मम मनोगतायाः इच्छायाः पूरणं भवतः एव दायित्वम् । स्वीकरोतु मदीयानि अङ्गुलीयकराङ्कवखड्गादीनि । एतानि भविष्यकाले यः अभिज्ञास्यति सः एव मम पुत्रः इति मन्यताम् । तस्य च यथायोग्यं

साहाय्यं क्रियताम्'' इति ।

एतावत् उक्त्वा सः कमपि अनुक्त्वा अरण्यं गतवान् ।

तेषु एव दिनेषु मगधराजेन पुत्री प्राप्ता । तस्याः जन्मकुण्डलीं दृष्ट्वा ज्योतिषिकाः अवदन् - ''अतीव विचित्रं भविष्यत् अस्याः । संन्यासिनी इव एषा जीवनं करिष्यति ! अस्यां च जनिष्यमाणः पुत्रः महाराजः भविष्यति'' इति ।

एतं विषयं ज्ञात्वा तद्राज्यं परितः विद्यमानाः युवराजाः तस्याः पाणिं ग्रहीतुं पङ्क्तौ स्थितवन्तः । 'एतस्मिन् युवराजानां सम्मर्दे यं कमपि मम पुत्री यदि परिणयेत् तर्हि ताम् अप्राप्तवन्तः अन्ये राजानः प्रतीकाराय युद्धयेरन्' इति अवगतवान् राजा । अतः सः एतस्मात् अपायात् स्वपरिवारं रक्षितुं पत्नीपुत्रीभ्यां सह गुप्तरूपेण अरण्यं गतवान् । नदीतीरे कुटीरं निर्माय सामान्यजीवनम् आरब्धवान् च । ततः अनतिदूरे एव कलिङ्गराजकुमारस्य कुटीरः आसीत् ।



कदाचित् मगधराजः पुत्रीं कुटीरे एव परित्यज्य पत्न्या सह फलपुष्पकन्दमूलादिकम् आनेतुं बहिः गतवान् । तदा सा राजकुमारी विभिन्नानां पुष्पाणां सङ्ग्रहं कृत्वा सुन्दरीं मालां रचितवती ।

कुटीरपार्श्वे एव वहन्त्याः नद्याः तीरे कश्चन महान् आम्रवृक्षः आसीत् । सा तम् आरुह्य शाखायाम् उपविश्य तां सुन्दरीं मालां जले प्रक्षिप्य विनोदम् अवलोकमाना आसीत् ।

सा माला नद्यां प्लवमाना गच्छन्ती अग्रे स्नानं कुर्वतः राजकुमारस्य कण्ठम् अलङ्कृतवती । सः तां मालां गृहीत्वा चिन्तयन् आसीत् - 'अहो, सुन्दर्याम् अस्यां मालायां कतिप्रकारकाणि पुष्पाणि सन्ति !! यया युवत्या एषा माला रचिता, सा अवश्यम् अपूर्वा सुन्दरी एव स्यात् । सा एतस्मिन् घोरारण्ये किमर्थं भवेत् ?' इति । अनन्तरं तस्याः सुन्दर्याः अन्वेषणाय सः तदा एव प्रस्थितवान् ।

अरण्ये गच्छता तेन कश्चित् मधुरः कण्ठध्वनिः श्रुतः । सः तत्रैव स्थित्वा सर्वत्र दृष्टिं प्रासारयत् । तदा आम्रवृक्षे उपविश्य गीतं गायन्ती सुन्दरी सा राजकुमारी तस्य दृष्टिपथम् आगता ।

ताम् एव राजकुमारीं निर्निमेषदृष्ट्या पश्यन् अविचलः सः अनुक्षणम् आत्मानं निगृह्णन् कुशलप्रश्नैः तया सह सम्भाषणम् आरब्धवान् । अन्ते तेन तस्याः पुरतः परिणयेच्छा

प्रकटिता । तस्य अपेक्षां ज्ञात्वा सा उक्तवती - ''भवान् मुनिकुले जातः इति प्रतिभाति । वयं तु क्षत्रियाः । एवं सति कथं वा शक्येत आवयोः विवाहः ?'' इति ।

तस्याः वचनं श्रुत्वा सः - ''अहम् अपि क्षत्रियः एव अस्मि'' इति वदन् स्वजीवने प्रवृत्तं सर्वं तां निवेदितवान् ।

सा अपि स्वपरिवारविषयम् अवदत् । एतयोः विषयं मगधराजः अपि ज्ञातवान् । सः मनसि एव निश्चितवान् यत् मम पुत्र्याः निमित्तं सर्वविधतया अपि योग्यः वरः अयम् एव इति । तदनन्तरं तयोः विवाहः यथाविधि सम्पन्नः ।

विवाहानन्तरं वर्षाभ्यन्तरे तयोः पुत्रः जातः । राजलक्षणैः सुशोभितस्य तस्य शिशोः विजयकलिङ्गः इति नाम कृतम् । महत्या प्रीत्या ताभ्यां तस्य पालनं पोषणं च कृतम् । कतिचन वर्षाणि अतीतानि । कलिङ्गः स्वस्य भ्रातुः च कुण्डलीं परिशील्य ज्ञातवान् यत् एतावता ज्येष्ठकलिङ्गस्य आयुः समाप्तम् अस्ति इति ।

तदनन्तरं सः पुत्रं विजयकलिङ्गम् आहूय उक्तवान् - ''पुत्र ! भवतः जीवनम् अस्माकं जीवनम् इव एतस्मिन् वने एव यापितं न भवेत् । भवज्जीवनस्य उद्देशः कश्चन अन्यः एव अस्ति । मम भ्राता ज्येष्ठकलिङ्गः दान्तिपुरस्य राजा अस्ति । तस्य उत्तराधिकारी भवान् शीघ्रमेव गत्वा सिंहासनम् अलङ्करोतु'' इति । ततः सः हितैषिणः वृद्धमन्त्रिणः वृत्तान्तं श्रावयित्वा आधाररूपेण त्रिविधानि वस्तूनि दत्त्वा आशीर्भिः अनुगृह्य तं प्रेषितवान् ।

विजयकलिङ्गः मातापित्रोः, मातामह-मातामह्योः च आशीर्वादम् अनुज्ञां च प्राप्य दान्तिपुरं गतवान् । वृद्धमन्त्रिणः दर्शनं कृत्वा स्वपरिचयं श्रावितवान् ।

तावता तस्य पितुः यथा ऊहा आसीत् तथैव राज्ञः अवसानं जातम् आसीत् । अतः राज्ये उत्तराधिकारिचिन्ता प्रसृता आसीत् ।

वृद्धेन मन्त्रिणा महासभा आकारिता, तस्यां विजयकलिङ्गस्य जन्मवृत्तान्तः श्रावितः । सर्वे अपि आश्चर्यचकिताः सन्तुष्टाः च सन्तः जय-घोषम् अकुर्वन् । मन्त्रिणां मार्गदर्शनेन राज्य-शासनं कुर्वन् विजयकलिङ्गः पूर्वजैः या प्रतिष्ठा सम्पादिता आसीत् तां पुनः प्रतिष्ठापितवान् ।





# रामायणम्

तादृश्यां स्थितौ पितरं दृष्ट्वा व्याकुलः रामः कैकेयीम् अपृच्छत् - ''मया कापि महती त्रुटिः अनुष्ठिता किम् ? पितुः एतादृश्याः स्थितेः किं कारणम् ? ईदृशीं दशां गतः पिता इतः पूर्वं कदापि न दृष्टः मया'' इति ।

तदा कैकेयी निरातङ्का सती अवदत् - ''राजा न कुपितः । तस्य मनसि काचित् इच्छा अस्ति । तां वक्तुं सः सङ्कोचम् अनुभवति । कदाचित् तेन मह्यं वरप्रदानस्य आश्वासनं कृतम् आसीत् । मया वरद्वयं पृष्टम् । तदुभयस्य दाने सः कष्टम् अनुभवति । वरस्य दाने अनिच्छा । अदाने तु पापभीतिबाधा । अतः किङ्कर्तव्यतामूढः जातः अस्ति सः । पूर्वं यत् आश्वासनं दत्तं तद्विषये इदानीं पश्चात्तापः तस्य । दत्तस्य वचनस्य परिपालनं धर्मः । अतः इदानीं तस्य दायित्वं भवता निर्वोढव्यम् अस्ति । दायित्वनिर्वहणं करोमि इति भवान् प्रतिजानीते चेत् तत् किम् इति अहं वदिष्यामि । भवतः पिता एतत् वक्तुं न पारयति'' इति ।

''मातः, मयि एवं संशयः किमर्थम् ? तादृशं किम् अस्ति, यच्च निर्वर्तयितुं न शक्येत ? यदि पिता वदेत् तर्हि किम् अहं अग्निप्रवेशं न कुर्याम् ? प्राणत्यागः करणीयः भवेत् चेदपि न कापि चिन्ता मम । अतः पितुः का आकाङ्क्षा इति वदतु भवती । अवश्यं ताम् अहं करिष्यामि एव'' इति अवदत् रामः ।

ततः कैकेयी देवासुरयुद्धं, दशरथस्य वरप्रदानं च विवृतवती । ''तदा दत्तस्य वरस्य अनुसारं भवता चतुर्दश वर्षाणि यावत् वनवासः



करणीयः । इयं राज्याभिषेकसज्जता व्यर्था न भवेत् । भरतः अभिषिक्तः सन् सर्वासु दिक्षु कीर्तिं प्रसारयेत् । भवान् यदि राज्यं हित्वा वल्कलानि धृत्वा वने निवसेत् तर्हि भवत्पिता वचनभ्रष्टः न भवेत्'' इति उक्तवती सा ।

एतादृशं कठोरं विषयं सा कर्कशशैल्या यत् उक्तवती तत् रामात् अन्यः यदि श्रुतवान् स्यात् तर्हि सः क्रुद्धः उन्मत्तो वा अभविष्यत् । किन्तु रामः तु शान्तभावेन - ''अवश्यं भवत्याः कथनवत् एव भविष्यति मातः ! अहम् अधुना एव वल्कलानि धृत्वा वनं गच्छामि । एतां वार्तां भवन्तः भरतं प्रापयन्तु । पितुः इच्छा एवम् एव अस्ति चेत् कथं राज्यं तस्मै न दद्याम् ? पिता मां न उक्तवान् एव एतां वार्ताम्'' इति अवदत् रामः ।

एतत् श्रुत्वा नितरां सन्तुष्टा कैकेयी - ''सः वस्तुतः भवन्तं वक्तुम् इच्छति स्म । किन्तु तस्य महती भीतिः आसीत् यत् भवान् एतं प्रस्तावम् अङ्गीकुर्यात् वा न वा इति । अतः एव पूर्वं तेन विषयोऽयं न उक्तः । अहम् अद्य एव भरतम् अत्र आकारयिष्यामि । तस्य राज्याभिषेकादिकं च चिन्तयिष्यामि । किन्तु विना विलम्बं भवता वनं प्रति प्रस्थातव्यम् । यतः भवतः प्रस्थानं यावत् न भविष्यति तावत् भवतः पिता भोजनस्नानादिकं न करिष्यति सर्वथा'' इति उक्तवती ।

अस्याः वचांसि श्रुत्वा दशरथः मूर्च्छितः अभवत् । रामः कैकेय्याः पितुः च प्रदक्षिणं कृत्वा प्रणम्य अन्तःपुरात् बहिः गतवान् । पट्टाभिषेकवेदिकायाः प्रदक्षिणं कृत्वा प्रस्थितं रामम् एव अनुसृतवान् दुःखितः क्रुद्धः च लक्ष्मणः ।

योगिनां मनोधारणाम् आत्मनि वहन् रामः रथारोहणं, छत्रचामरादीनाम् उपयोगं चापि स्वयं निषिद्धवान् । स्वमातरं कौसल्यां सूचयितुं गतवान् रामः । दशरथस्य अन्तःपुरस्त्रियः रोदनम् अकुर्वन् ।

कौसल्याप्रासादं प्रति रामलक्ष्मणयोः गमनं दृष्टवन्तः जनाः किमपि न अवगतवन्तः यत् अत्र किं प्रवर्तते इति । द्वारपालकाः सजयघोषं तयोः स्वागतम् अकुर्वन् ।

अग्रे दृष्टान् वृद्धविप्रान् प्रणम्य प्रविशतोः रामलक्ष्मणयोः आगमनवार्तायाः सूचनार्थं काश्चन स्त्रियः ससन्तोषम् अन्तः अगच्छन् । अन्याः काश्चन स्त्रियः उच्चैः जयनिनादं कृतवत्यः ।

हवनकर्मणि निरतया कौसल्यया अन्तः प्रविष्टौ रामलक्ष्मणौ आलिङ्गितौ । एतां वार्तां मातरं कथं निवेदयेयम् इति रामः न जानाति स्म ।

''अम्ब ! सर्वं विपर्यस्तं जातम् अद्य । राज्यादिकं परित्यज्य चतुर्दश वर्षाणि यावत् कन्दमूलादिकं खादन् वनवासं कर्तुं गच्छन् अस्मि अहम् इदानीम् । सिंहासनं त्यक्त्वा अहं गच्छन् अस्मि । इतः परं दर्भासने एव मम उपवेशनं, न तु सिंहासने । पिता भरतस्य पट्टाभिषेकं कर्तुम् उद्युक्तः अस्ति'' इति रामः उक्तवान् ।

एतस्य श्रवणमात्रेण एव निस्संज्ञा इव अभवत् कौसल्या । उत्थापितवन्तं रामम् अवदत् सा - ''राम ! मम जीवने सुखमेव नास्ति । भवते जन्म दत्त्वा कष्टराशिम् एव लब्धवती अहम् । एतादृशात् मातृत्वात् अपि वन्ध्यत्वम् एव वरम् । वन्ध्यायाः तु एका एव चिन्ता भवति - अपत्यं न जातम् इति । भवतः राज्याभिषेकेण वा स्वल्पं सुखं लभ्येत इति चिन्तितं मया । यद्यपि अहं राज्ञः महिषी तु अस्मि, तथापि सपत्न्योः अपकथनेन बाधिता भवामि स्म सदा अपि । मम पतिः सदापि मत्पक्षं विहाय कैकेयीम् एव प्रियतरां मन्यते स्म । अतः तस्याः सेवां कुर्वाणा अहं चेटीनाम् अपेक्षया हीना अभवम् । राजसिंहासनम् अलङ्कृतवन्तं भवन्तं द्रष्टुम् एव पञ्चदश वर्षाणि यावत् सर्वविधानि अपमानानि सोढानि मया । सा अपि आशा इदानीं धूलिसात् जाता । इतः परं जीवनात् अपि मरणम् एव वरम् । किन्तु मरणं स्वयं न आयाति खलु ?



अतः अहम् अपि भवता सह आगमिष्यामि'' इति ।

कौसल्यावचनानि शृण्वतः लक्ष्मणस्य मनसि उपायः स्फुरितः । सः कौसल्याम् उद्दिश्य - ''अम्ब ! कैकेय्याः वचनम् अनुसृत्य वनं गन्तव्यम् इत्यत्र मम तु किमपि औचित्यं न भाति । वृद्धस्य राज्ञः मनः दुर्बलं वर्तते । मोहाविष्टमनस्का स्त्री किमपि अकार्यं करोति । तावता अस्माभिः तथैव करणीयम् इति नास्ति । तस्याः अविवेकवचनस्य न किमपि महत्त्वम् । सर्वथा धिक्काराह्री सा'' इति उक्तवान् ।

ततः सः रामम् उद्दिश्य अवदत् - ''भ्रातः ! स्त्रीवचनवशीकृतः राजा युक्तायुक्त-विवेचनरहितः जातः अस्ति इति प्रजाः जानीयुः । राजा भवन्तं वनं प्रति प्रेषणाय



प्रयासं कुर्वन् अस्ति चेदपि वयं तत् न अनुमतवन्तः इति जनाः जानन्तु नाम । स्वसामर्थ्येन सर्वान् विरोधिनः पराजित्य राज्यं वशीकरवाम वयम् । अहम् अनेन बाणेन शत्रुसंहारं करोमि । पिता अस्माकं वचनस्य विरोधी इत्यतः प्रथमं तमेव अहं मारयिष्यामि । अत्र लेशमात्रम् अपि पापं नास्ति । अस्मासु भवान् ज्येष्ठः । अतः राज्यम् एतत् भवतः एव । भवता किं वा अपराद्धं, येन वनवासं कुर्यात् ? एषोऽहं युद्धाय सन्नद्धः अस्मि'' इति ।

ततः कौसल्या रामम् उक्तवती - ''पुत्र ! यथा लक्ष्मणः वदन् अस्ति तथा करोतु । पितुः वचनं पालनीयम् एव इति नास्ति । यदि भवान् वनं गच्छेत् तर्हि भवतः माता अहं निरशनेन प्राणत्यागं कुर्याम् । ततः यत् पापं प्राप्येत तस्य फलं भवता एव अनुभोक्तव्यं भविष्यति'' इति ।

तदा रामः मातरम् उक्तवान् - ''अम्ब ! पितुः वचनं धिक्कर्तुं न शक्यते । पित्राज्ञा-पालनाय लोके कियन्तः कियन्ति घोरकृत्यानि अकुर्वन् !! कण्डुनामकः मुनिः गोवधम्, परशुरामः मातृवधं च अकरोत् । सगरस्य पुत्राः पितुः आज्ञां पालयितुं पाताललोकं गताः । तत्रैव ते मरणं प्राप्तवन्तः अपि । भवत्याः कथनं श्रुत्वा यदि अहं वनं न गच्छेयं तर्हि महान् एव अनर्थः भवेत् । कैकेयी अपि मम माता एव । भरते यावती प्रीतिः ततोऽपि अधिका प्रीतिः मयि अस्ति तस्याः । सा एव मम वनगमनम् इच्छन्ती अस्ति । पिता अत्र सहमतः अस्ति अपि । अतः मया वनं प्रति गन्तव्यम् एव । कृपया भवत्या अनुज्ञा दातव्या'' इति ।

पुनः तेन लक्ष्मणः उक्तः - ''लक्ष्मण ! भवतः प्रेमपौरुषौ अहं न जानामि किम् ? सर्वश्रेष्ठस्य धर्मस्य निर्वहणाय भवान् अपि अहम् इव एव चिन्तयेत् । धर्मात् अनपेतः कोऽपि मार्गः न चिन्तनीयः'' इति ।

मातुः सान्त्वनाय रामेण बहवः धर्माः उक्ताः । 'वृद्धं चिन्ताग्रस्तं च पतिं परित्यज्य भवत्याः वनगमनं सर्वथा अनुचितम्' इति अबोधयत् सः ।

ततः सः लक्ष्मणम् उक्तवान् - ''एषः दैवसङ्कल्पः अस्ति । अन्यथा मयि प्रेमवती कैकेयी कथं मम अरण्यप्रेषणं चिन्तयेत् ? मम पट्टाभिषेकः अवरुद्धः इत्यस्य श्रवणात् भवता महत् दुःखं प्राप्तम् । एवं स्थिते एतस्याः

वार्तायाः श्रवणात् अस्मत्पितुः दशरथस्य दुःखं कियत् जातं स्यात् इति भवान् चिन्तयतु । मया कदापि पितुः हृदयं न तापितम् । इदानीम् अपि तस्मै कष्टं दातुम् अहं न इच्छामि'' इति ।

रामेण पित्राज्ञापरिपालनाय दृढसङ्कल्पः कृतः अस्ति इति स्पष्टतया ज्ञातवती कौसल्या तस्य कल्याणाय विप्रैः हवनं कारयित्वा आशीर्भिः अनुगृह्य रामस्य वनगमनम् अनुज्ञातवती ।

रामः सीतायाः अन्तःपुरं गतवान् । तत्र तस्याः दर्शनस्य अनुक्षणं तस्य नेत्राभ्याम् अश्रूणि निर्गतानि । यस्य मुखे पट्टाभिषेकोत्साहः भवेत् तादृशस्य नेत्राभ्याम् अश्रूणां पतनं दृष्ट्वा सीता व्याकुला सती तम् अपृच्छत् – ''आर्य ! किम् एतत् ? एतस्य रोदनस्य किं कारणम् ?'' इति ।

प्रवृत्तं सर्वं सङ्क्षेपेण श्रावयित्वा रामः अवदत् – ''वनतः मम प्रत्यागमनपर्यन्तं राजा भरतः यथा वदति तथा करोतु भवती । तस्य प्राजावत्याः भवत्याः व्यवहारेण सः खिन्नतां न अनुभवेत् । मातापितरौ अपि भवत्या श्रद्धया सेवनीयौ'' इति ।

तेन उक्तं सर्वं श्रुत्वा क्रोधमिश्रितेन स्वरेण सीता उक्तवती – ''किम् एतत् वदति भवान् ? किं भवता मम अपमाननं कर्तुम् इष्यते ? स्त्रीणां कृते पतिः एव सर्वस्वम् । भवता वनवासः क्रियेत चेत् मया अपि सः एव क्रियते । वने भवतः मार्गे कण्टकानि अपसार्य सौविध्यं किं मया न कल्पनीयम् ? भवादृशः



पराक्रमी मया सह भवति चेत् मम कस्मात् भयम् ? यः अरण्ये वसतः जनान् रक्षति सः मां न रक्षेत् किम् ? भवान् शतधा निवारयति चेत् अपि मम निर्धारे परिवर्तनं न भविष्यति'' इति ।

आत्मना सह वनं प्रति सीतायाः आगमनं, वने बहुविधानां कष्टानां सहनं च रामः सर्वथा न इच्छति स्म । सविस्तरं कष्टानि क्लेशान् च सः तस्याः पुरतः विवृतवान् । तथापि सीतायाः निर्णयः न परिवृत्तः ।

''यथा भवतः जीवने वनवासयोगः वर्तते इति ज्योतिषिकैः उक्तं तथैव मम जीवनेऽपि भविष्यति इति प्राज्ञैः उक्तम् अस्ति एव । अतः भवता सह अहम् अपि वनवासार्थम् आगमिष्यामि एव'' इति दृढेन स्वरेण उक्तवती सीता ।

तथापि रामः तस्याः अनुसरणं सर्वथा न अन्वमन्यत । तदा सीता क्रुद्धा दुःखिता च भूत्वा उक्तवती - ''यदि मम पिता जनक-महाराजः जानीयात् तर्हि सः 'मम जामाता पुरुषरूपेण विद्यमाना काचित् स्त्री' इति किं न चिन्तयेत् ? सः भवन्तं शूरं मन्यते । भवान् कस्मात् बिभेति ? अहं नीता चेत् कष्टं भवेत् इति खलु भवतः आतङ्कः ? कष्टं भवतः भवेत् उत मम ? अहं तु सर्वविधानि कष्टानि अनुभवितुं सज्जा एव । शूरः भवान् कथं कष्टात् भीतः भवेत् ? कः अपराधः कृतः मया ? भवन्तं विना अन्यः कः अस्ति मदीयः ? यत्र भवान् तत्रैव मम स्वर्गः इति उक्तम् आसीत् खलु ?'' इति वदन्ती रोदनम् आरभत ।

अन्ते रामः अनन्यगतिकतया वनं प्रति तस्याः नयनम् अङ्गीकृत्य तस्याः सान्त्वनं कृतवान् । यदा सा समाहितमनस्का जाता तदा रामः ताम् उक्तवान् - ''भवती सत्वरं सिद्धा भवतु वनं प्रति गमनाय । वने राजोचितः व्यवहारः आचारः वा सर्वथा न शोभते । आभूषणादीनि तत्र न भवेयुः । अतः तानि अन्येभ्यः दत्त्वा, संन्यासिनः सज्जनान् च भोजयित्वा तेषाम् आशीर्वादं प्राप्नोतु । याचकेभ्यः प्रभूततया धनधान्यादीनां दानं करोतु'' इति ।

यथा रामः उक्तवान् तथा कर्तुं ससन्तोषम् उद्युक्ता अभवत् सीता ।





# वज्रदर्शि उपकरणम्

कस्मिंश्चित् नगरे श्रीगुप्तनामकः कश्चन वणिक् आसीत् । कदाचित् तस्य बन्धुगृहे विवाहकार्यक्रमः निश्चितः जातः । सः बन्धुः पार्श्वग्रामस्थः । अतः पद्भ्यामेव श्रीगुप्तः तं ग्रामं प्रति प्रस्थितः । मध्येमार्गं रङ्गनाथनामकः कश्चन मिलितः । रङ्गनाथः नगरसमीपे स्थिते कस्मिंश्चित् ग्रामे निवसति । सः क्षेत्रे शाकान् वर्धयित्वा नगरं नीत्वा विक्रीणीते, सायं गृहं प्रतिगच्छति च ।

उभौ अपि वार्तालापं कुर्वन्तौ अग्रे गतौ । मार्गात् अनतिदूरे किञ्चन भवनं दृष्टम् । 'भूतभवनम्' इति प्रसिद्धं तत् गृहं पूर्वं कस्यचन भूस्वामिनः वासस्थानम् आसीत् । कदाचित् केचन लुण्ठाकाः चौर्यं कर्तुं तत्र आगताः । एतत् ज्ञातवन्तः भूस्वामिनः गृहसदस्याः पलायनं कृतवन्तः । लुण्ठाकाः धनादिकं लुण्ठयित्वा निर्गताः । गृहं तु रिक्तम् एव अतिष्ठत् । तस्य रक्षणं केनापि न कृतम् इत्यतः तत् शिथिलम् अभवत् । तेन सह काचन वार्ता अपि प्रसृता यत् तस्मिन् गृहे भूतानाम् आवासः अस्ति इति ।

वार्तालापं कुर्वन्तौ तौ उभौ अपि तस्य भवनस्य समीपम् आगतौ । तदा रङ्गनाथः श्रीगुप्तम् उक्तवान् – ''महोदय ! प्रतिदिनं मम मनसि काचन इच्छा उत्पन्ना भवति यत् एतत् भवनम् एकवारं द्रष्टव्यम् इति । किन्तु एकाकी तत्र गन्तुं सङ्कोचम् अनुभवामि । यतः कोऽपि मद्विषये किमपि चिन्तयेत् इति भीतिः मम । अद्य आवाम् उभौ स्वः । तत् भवनं दृष्ट्वा आगच्छाव किम् ?'' इति ।

तदा श्रीगुप्तः हसन् पृष्टवान् – ''भूतात् भीतः सन् अहम् अद्यावधि तत्र न गतवान् इति कुतः न उच्यते भवता ?'' इति ।

''मम भूतविषयकभीतिः कापि नास्ति । भूतप्रेतादीनाम् अस्तित्वविषये मयि विश्वासः अपि नास्ति । आगच्छतु, भवनस्य अन्तः

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



आवाभ्यां भगवते कृतज्ञता समर्पणीया । अत्र भीतेः न कोऽपि अवसरः । निश्चिन्तः भवतु भवान्'' इति अवदत् ।

''तत् अस्तु, इदानीम् इतः बहिः गमनाय कः मार्गः ?'' इति अपृच्छत् श्रीगुप्तः ।

रङ्गनाथः प्रयत्नेन कांश्चन भित्तिखण्डान् निष्कास्य बहिः आगतः । तस्य पृष्ठतः एव श्रीगुप्तः अपि आगतः ।

एवम् आगमनसमये रङ्गनाथेन किञ्चन ताम्रपात्रं प्राप्तम् । तस्य मुखं जतुना पिहितम् आसीत् । तं जतुं निष्कासितवान् रङ्गनाथः । पात्रस्य अन्तः पाषाणाः आसन् । श्रीगुप्तः दर्शनमात्रेण एव ज्ञातवान् यत् एते न केवलं पाषाणाः, अपि तु अमूल्यानि रत्नानि इति । तस्य मनसि विचारः उत्पन्नः यत् रङ्गनाथं वञ्चयित्वा मया एव एतानि प्राप्तव्यानि इति ।

अतः सः रङ्गनाथम् उक्तवान् - ''गृहस्य प्रधानद्वारदेशे एतादृशानि अन्यानि अपि त्रिचतुराणि स्युः । एतादृशानां निखननात् शुभं भवति इति काचन प्रथा वर्तते । अतः भवान् सावधानं सर्वत्र पश्यतु । इतोऽपि एतादृशानि पात्राणि लभ्येरन्'' इति ।

रङ्गनाथः पुनरपि भग्नायाः भित्तेः समीपं गत्वा अन्वेषणं कृतवान् । किन्तु किमपि न प्राप्तं तेन । सः रिक्तहस्तः सन् प्रत्यागतः ।

तस्य आगमनात् पूर्वं श्रीगुप्तः पात्रे स्थितानि रत्नानि स्वीकृत्य तत्पात्रं सामान्यैः पाषाणैः पूरितवान् आसीत् ।

रङ्गनाथः यदा प्रतिनिवृत्तः तदा श्रीगुप्तः तान् पाषाणान् दूरे क्षिपन् - ''एतैः किं प्रयोजनम् ? मार्गे मार्गे एतादृशाः पाषाणाः

गत्वा पश्याव'' इति उक्तवान् रङ्गनाथः ।

उभौ अपि शैथिल्यावस्थायां स्थितं तत् गृहं प्रविष्टवन्तौ । भवनस्य भित्तयः नष्टप्रायाः दृष्टाः । सर्वत्र ऊर्णनाभजालानि व्याप्तानि दृश्यन्ते स्म । तत् भवनं दर्शनमात्रेण भीतिं जनयति स्म । तथापि उभौ अपि धैर्यम् अवलम्ब्य अन्तः गतवन्तौ ।

तस्मिन् एव समये भित्तिरेका भग्ना सती सशब्दं पतिता । तस्मात् बहिर्गमनमार्गः अवरुद्धः अभवत् । तदा श्रीगुप्तः भयेन - ''भूतपिशाचाद्याः आवां पीडयेयुः । भवत्-कारणात् अहम् अपि अद्य सङ्कटे अपतम्'' इति अवदत् ।

तदा रङ्गनाथः हसन् - ''न एषा भूतचेष्टा । गतायां रात्रौ महती वृष्टिः पतिता खलु ? अतः काचित् भित्तिः इदानीं पतिता । वस्तुतः सा भित्तिः आवयोः उपरि न पतिता इत्यतः

लभ्यन्ते एव'' इति उक्त्वा तत् पात्रं रङ्गनाथस्य हस्ते दत्तवान् ।

पाषाणरूपिणः अमूल्यवस्तुनः स्वायत्तीकरणाय एषः श्रीगुप्तः मां भग्नभित्तिसमीपं प्रेषितवान् आसीत् इति ज्ञातवान् रङ्गनाथः । तथापि तम् अंशं सः न प्रकटितवान् ।

ततः उभौ अपि गृहं प्रति प्रस्थितौ । अनन्तरदिने रङ्गनाथः शाकान् विक्रीय प्रतिगमनसमये श्रीगुप्तगृहं गतः । रङ्गनाथं दृष्टवतः श्रीगुप्तस्य मुखं विवर्णं जातम् । एतत् लक्षितवतः रङ्गनाथस्य सन्देहः दृढः जातः ।

रङ्गनाथस्य कश्चन सुहृत् नगरे निवसति स्म । तस्य नाम वसन्तराजः इति । धनिककुले उत्पन्नः अपि सः इदानीं दुरवस्थाग्रस्तः जातः आसीत् । नाटकादिषु पात्रं वहन् जीवनं निर्वहति स्म सः । नगरं गत्वा तं दृष्ट्वा रङ्गनाथः प्रवृत्तं सर्वं निवेद्य – ''श्रीगुप्तः कथमपि दण्डनीयः एव'' इति सानुरोधम् उक्तवान् । एतत् अङ्गीकुर्वन् वसन्तराजः कञ्चन उपायं सूचितवान् ।

तद्दिने एव सायं वसन्तराजः धनिकवेषं धृत्वा श्रीगुप्तस्य आपणं गतः ।

श्रीगुप्तः तस्मिन् समये स्वेन प्राप्तं रत्नं स्वच्छीकुर्वन् आसीत् । वस्तुतः तत् उत्कृष्टं वज्रम् एव । प्राचीनताकारणात् मृदा युक्तं सत् सामान्यः पाषाणः इव दृश्यते स्म तत् ।

वसन्तराजः श्रीगुप्तम् उक्तवान् – ''इदं वज्रं किल ? अरबदेशे वज्रस्य मूल्यं भवति अत्यधिकम् । अहम् अरबदेशं गत्वा वज्रस्य विक्रयणं कृत्वा एव प्रभूतं धनं सम्पादितवान् अस्मि'' इति ।

''वज्रस्य मूल्यं कथं निर्णेतुं शक्येत ?''



इति वसन्तराजं पृष्टवान् श्रीगुप्तः ।

''एतदर्थं किञ्चन सूक्ष्मदर्शकम् अस्ति । वज्रं पात्रे स्थिते जले एकं दिनं स्थापनीयम् । यदि भवान् इच्छति तर्हि अहं तत् उपकरणं भवते दिनावधि दातुं सज्जः'' इति उक्तवान् वसन्तराजः ।

एतावता वसन्तराजविषये श्रीगुप्तस्य विश्वासः उत्पन्नः आसीत् एव । अतः सः स्वस्य वज्रं वसन्तराजाय प्रदर्शयन् – ''भवतः सूक्ष्मदर्शकयन्त्रेण अस्य मूल्यं ज्ञातुं शक्येत किम् ?'' इति पृष्टवान् ।

वसन्तराजः वज्रं हस्तेन स्वीकृत्य तत् पश्यन् – ''अवश्यं ज्ञातुं शक्यते । पुरातनं वज्रम् एतत् । एषु दिनेषु एतादृशं न लभ्यते'' इति उक्तवान् ।

''तत् सूक्ष्मादर्शकयन्त्रं मह्यं योग्येन मूल्येन दीयेत किम् ?'' इति श्रीगुप्तः वसन्तराजं

पृष्टवान् ।

"न सर्वथा । एतादृशम् उपकरणं जगति चत्वारि एव वर्तन्ते । तेषु एकं मम समीपे अस्ति" इति वदन् वसन्तराजः आत्मना आनीतायाः पेटिकातः वर्णमयीं काञ्चन लघ्वीं पेटिकाम् उद्धृत्य - "भवान् तत् वज्रम् एतस्याः अन्तः स्थापयतु" इति उक्तवान् ।

श्रीगुप्तः तत् वज्रं तत्र स्थापितवान् ! वसन्तराजः पेटिकां झटिति पिहितवान् ! बृहत्याः पेटिकातः किञ्चिद् भस्म निष्कास्य श्रीगुप्तस्य हस्ते दत्त्वा - "एतत् भस्म अस्यां पेटिकायां स्थापयतु" इति वदन् लघुपेटिकां कीलयित्वा श्रीगुप्ताय यच्छन् - "एतां जलपूर्णे पात्रे संस्थापयतु । अहं श्वः अस्मिन्नेव समये आगत्य एतां पेटिकां नेष्यामि" इति उक्त्वा ततः निर्गतवान् सः ।

वसन्तराजः रङ्गनाथगृहम् आगत्य आत्मना आनीतानि वज्राणि रङ्गनाथाय दत्तवान् । तानि स्वीकृत्य - "एतेषां विक्रयणं कृत्वा प्राप्तं धनं विभज्य स्वीकरवाव" इति उक्तवान् रङ्गनाथः ।

"पूर्वम् एतेषां वज्राणां निमित्तमेव बहूनि मारणानि सञ्जातानि । सुखि कुटुम्बम् एकं नाशं प्राप्नोत्" इति उक्तवान् वसन्तराजः ।

"कथम् एतत् ज्ञायते भवता ?" इति पृष्टवान् रङ्गनाथः ।

"एतानि वज्राणि क्रीणता मम पितामहेन वंशः एव नाशितः" इति उक्तं वसन्तराजेन ।

"तर्हि भवान् एव एतानि वज्राणि स्वीकरोतु" इति उक्तवान् रङ्गनाथः ।

"रङ्गनाथ ! किं वदन् अस्ति भवान् ? एतानि वज्राणि प्राप्तुं भवान् एव कारणीभूतः । अस्माकं वंशः यदा विनाशं गतः ततः अहमपि एतेषु वज्रेषु अभिरुचिहीनः अभवम् । आवाम् अनेन वज्रविक्रयणेन प्राप्तं धनं समं विभज्य स्वीकरवाव" इति उक्तवान् वसन्त-राजः ।

अनन्तरदिने पात्रे स्थापितां लघुपेटिकाम् उद्घाट्य दृष्टवान् श्रीगुप्तः । तस्यां सामान्याः पाषाणाः आसन् । श्रीगुप्तेन ज्ञातं यत् पूर्वदिने आगतः वणिक् वञ्चकः आसीत्, भस्मदान-व्याजेन सः वज्राणि अपहृतवान् इति । दुःखं सोढुम् अशक्नुवन् सः रोदनं कृतवान् ।

रङ्गनाथः नगरे एकं बृहत् भवनं निर्माय वाणिज्ये महान्तं लाभं सम्पादितवान् ।



5

चित्रम् - राजेशः

# अपराजेयः गरुडः

वनवासिनां वसतौ प्रवर्तमानस्य ज्ञानाय प्रेषितस्य रामसिंहस्य अन्वेषणाय आदित्यः स्वयं निर्गच्छति । तत्र सः वनवासिनां जाले पतति । रामसिंहः आदित्यस्य मोचनाय साहाय्यं करोति । राजा निश्चिन्ततया दीर्घं निश्श्वसिति ।

आदित्यः वसतिं प्रत्यागच्छति । अरुणा तम् अनुसरति ।

कृपया अन्तः आगम्यताम् ।

राज्ञः अधिकविचारणातः पूर्वम् एव रामसिंहः ततः निर्गतः । अतः किं किं प्रवृत्तम् इति राजा न ज्ञातवान् ।

तथापि रामसिंह-कारणतः भवता कथं विपत्तिः प्राप्ता इति तेन ज्ञातम् एव ।

दुष्टशक्तिः पुनरपि प्रबला जाता अस्ति इति भाति । भवता अवधानवता भवितव्यम् ।

वनवासिनां वसतिं प्रति रामसिंहस्य प्रेषणसमये मया न चिन्तितम् आसीत् यत् सः कष्टे पतेत् इति ।

तावता निगडैः बद्धैः कैश्चित् वनवासिभिः सह रामसिंहः तत्र उपस्थितः भवति ।

अस्माकं सैनिकाः एतान् सीमाप्रदेशे दृष्टवन्तः । ते एतान् अङ्गरक्षकाधीनान् कृतवन्तः ।

के एते राम-सिंह ? किमर्थम् एते गृहीताः भवता ?

मम पूर्णः विश्वासः अस्ति यत् भगवान् भवन्तं रक्षति इति ।


के भवन्तः ? सीमापर्यन्तं कथम् आगतं भवद्भिः ?
वयं पर्वतीयगुहानां समीपे निवसामः । अस्मन्नायकाः तत्र अस्मान् प्रापितवन्तः ।
भवतां नायकः कः ?


वयं तेषां नाम न जानीमः । तेषु कश्चित् अर्चकः इव भासते । अपरः राजकुमारः इव । सः वदति यत् यस्य पट्टाभिषेकाय सन्नाहः प्रचलति सः वस्तुतः राजकुमारः न इति ।


एते कारागारे स्थाप्यन्ताम् । एतेषां व्यवस्था उत्तमा भवतु । एते अन्यैः दुर्मार्गे प्रवर्तिताः ।
किन्तु महोदय !


युवकाः ते ततः नीयन्ते भटैः ।
भवान् एतान् दण्डयेत् इति अहं चिन्तितवान् आसम् ....
नायकाः एव दण्डिताः भवेयुः, न तु सहचराः ।


एषा एव दूरदर्शिता ।
ते विवेकं प्राप्नुयुः इति आशासे ।
राज्याभिषेकस्य अनन्तरं ते कारागारात् मोचनीयाः ।


भवती राजभवनं प्रति प्रस्थितवती आसीत् ननु ?
आम्, अचिरात् मया गन्तव्यम् ।
मया अपि राज्ञः समीपे गन्तव्यम् अस्ति ।


रवीन्द्रदेवः तूष्णीं न तिष्ठति इत्येतत् सिद्धम् । सः आत्मानं राजकुमारं, सिंहासनस्य उत्तराधिकारिणं चापि भावयति ।
आदित्यः कञ्चन पादध्वनिं शृणोति ।



एतेन कश्चन सन्देशः आनीतः अस्ति ।
महाराज ! भवता किम् अहम् आहूतः ?
अहं शीघ्रमेव आगच्छामि ।




भवतः समयः स्यात् चेत् मेलितुमिच्छामि इति वदति महाराजः ।
आदित्य ! राजगुरुणा सन्देशः प्रेषितः अस्ति यत् भवतः विवाहः राज्याभिषेकात् पूर्वम् एव भवेत् इति । श्वः प्रातः अनुष्ठानस्य आरम्भः । भवत्सम्बन्धिनः धार्मिकविधयः प्रातःकाले आरप्स्यन्ते ।




अपराह्णीये अनुष्ठाने अरुणा उपस्थिता भविष्यति । एतदनन्तरं, तन्नाम परश्वः विवाह-समये एव, भवतः मेलनं भवेत् तया सह ।
मया अवगतं महाराज !




अनन्तरदिने आदित्यः गरुडप्रतिमायाः पुरतः नेत्रे निमील्य उपाविशत् । प्रतिमायाः पार्श्वे स्थापितः पिञ्छः उद्गत्य आकाशे अडयत । सः आदित्यसमीपम् आगत्य तं परितः भ्रमति । तस्मात् किञ्चन प्रभामण्डलं निर्मितं भवति ।

अकस्मात् नेत्रे उन्मीलितवान् आदित्यः सर्वासु दिक्षु पश्यति ।

मया विशिष्टा शक्तिः अर्जिता इति भाति ।

सः भूतपूर्वस्य प्रधान-मन्त्रिणः चित्रस्य पुरतः तिष्ठति ।

गरुडः सः भवतः रक्षणं करिष्यति वत्स !

भवतः आशीर्वादः अपेक्ष्यते आर्य !

भवतः सर्वेषां कार्याणां पृष्ठभूमिकायां लोककल्याणरूपः उद्देशः सदा भवेत् इति स्मर्तव्यं भवता । स्वस्य चन्द्रवंशत्वं, सिंहासनारोहणार्हत्वं च प्रमाणीकरणीयं भवता ।

एतत् अहं सदा स्मृतिपथे स्थाप-यामि आर्य !

इदानीं कः आगच्छन् स्यात् ?

अनुवर्तते

# रक्षाबन्धनम्



भगिन्यः भ्रातृणां मणिबन्धे यत् सूत्रं बध्नन्ति तत् 'राखी' इति प्रसिद्धम् अस्ति । रक्षाबन्धनं बान्धव्यस्य वात्सल्यस्य च प्रतीकम् । अन्ये उत्सवाः इव आचरण-मात्रोद्देशकः न एषः रक्षाबन्धनोत्सवः । रक्षायाः बन्धनाय भगिनी भ्रातरं स्वगृहम् आमन्त्रयति । विशेषसज्जतां कृत्वा तस्य मणिबन्धे रक्षां बध्नाति, अक्षतान् च शिरसि विकीर्य तं पूजयति च । एवं कृत्वा भ्रातुः दीर्घायुषः कामनां करोति सा । भगिन्या यः आदरः दर्शितः तदर्थं प्रत्यादरं प्रदर्शयन्तः भ्रातरः तस्मिन् मङ्गलमये प्रसङ्गे आश्वासनं कुर्वन्तः वाग्दानं कुर्वन्ति यत् कस्याश्चिदपि स्थितौ भवत्याः रक्षणम् अहं करिष्यामि एव, एतत् मम आद्यं कर्तव्यम् इति । एतस्मिन् उत्सवे भगिनीनां भ्रातृणां च एव पात्रम् । अन्ये गृहसदस्याः भूरिभोजनमात्रे भागं वहन्ति ।

अस्य उत्सवस्य आचरणम् उत्तरभारते आधिक्येन दृश्यते । किन्तु साङ्केतिकरूपेण तु देशे सर्वत्र आचर्यते एव । भगिन्यः भ्रातृणां हस्ते रक्षां बध्नत्यः तेषाम् अभयं प्राप्नुवत्यः दृश्यन्ते सर्वत्र । अस्य उत्सवस्य कोऽपि धार्मिकः सम्बन्धः नास्ति, तथापि आ प्राचीनकालात् एतस्य आचरणं तु अनुवर्तते एव ।

महाभारते द्रौपदी श्रीकृष्णस्य हस्ते रक्षां बद्ध्वा 'मम रक्षणं करोतु' इति सम्प्रार्थ्य ततः 'भवत्याः सुमङ्गलीत्वं शाश्वतं यथा तिष्ठेत् तथा करिष्यते' इति अभयदानम् अपि प्राप्तवती आसीत् इति श्रूयते ।

भारतस्य इतिहासः ज्ञापयति यत् अलेक्साण्डरस्य पत्नी रक्षाबन्धनस्य माहात्म्यं ज्ञात्वा पूरूरवसः हस्ते रक्षां बद्ध्वा पतिप्राणरक्षणरूपम् अभयं प्राप्तवती आसीत् इति ।

रक्षाबन्धनावसरे भगिन्यः - *'येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामनुबध्नामि रक्षे मामव मामव'* इति प्रार्थनां कुर्वन्ति । अद्वितीयः अयम् उत्सवः भारते भ्रातृभगिन्योः सम्बन्धम् इतोऽपि दृढतरं कर्तुं शक्तः जातः अस्ति ।

अस्मिन् वर्षे अगस्ट्मासे नवमे दिनाङ्के भविष्यति अनुपमः अयम् उत्सवः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्



## भवदर्थकं विज्ञानम्

### काकाः अपि बुद्धिमन्तः एव

पक्षिषु आधिक्येन सर्वत्र दृश्यमानाः तु काकाः एव । काकः आ सहस्रशः वर्षेभ्यः अस्माभिः सहैव जीवति । तथापि तस्मिन् अस्माकं कुतूहलम् आदरः वा नाधिकम् । किन्तु एषु दिनेषु प्रवृत्तानि संशोधनानि ज्ञापयन्ति यत् काकानां बुद्धिमत्ता न क्षीणा इति ।

विज्ञानिभिः परिलक्षितम् अस्ति यत् नेफ्तलिन्गुलिकानाम् उपरि नृत्यम् इच्छन्ति काकाः इति । तस्यां गुलिकायां स्थिताः रासायनिकांशाः काकपादस्थान् परावलम्बिनां कीटानां निवारणे उपकुर्वन्ति । प्रसिद्धः जीवशास्त्रज्ञः बर्न्हार्ड् ग्झिमेकः वदति यत् केचन काकाः अग्निशलाकायाम् अग्नियोजनं ज्ञातवन्तः दृष्टाः मया इति । ते काकाः अग्नियुक्ताः शलाकाः पक्षयोः अधः धरन्ति । एतत् किमर्थम् इति तु तेन न ज्ञातम् । काकाः गुरुत्वशक्तेः उपयोगं सम्यक् एव कुर्वन्ति । आहारत्वेन प्राप्तानां बीजादीनाम् आवरणस्य भङ्गे यदा असमर्थता भवति तदा ते तानि बीजानि उन्नतस्थलं प्रति नीत्वा अधः पातयन्ति । एतादृशं सर्वं कुर्वन्तः काकाः किं बुद्धिमन्तः न ?

## भवतां परिसरः

### सूर्यशक्तिः हिमखण्डं द्रावयितुम् असमर्था



सूर्यस्य अपारा शक्तिः भवति इति वयं जानीमः एव । आश्चर्यं नाम महती अपि सा सूर्यशक्तिः हिमखण्डं द्रावयितुम् असमर्था भवति इति । सद्यस्सिद्धस्य हिमखण्डस्य उपरि पतितानां सूर्यकिरणानां ९०% भागः प्रतिफलितः भवति । अतः एव द्रवीकरणाय यावत् औष्ण्यम् आवश्यकं तावत् तस्मिन् सङ्क्रामयितुं न शक्नुवन्ति ते । भवन्तः कदाचित् पृच्छेयुः - सूर्यकिरणकारणतः हिमस्य द्रवीभवनं दृश्यते खलु इति । वस्तुतः तस्य द्रवत्वस्य कारणं भवति - समुद्रीयः वायुः ।

आत्मनः उपरि पतितानां सूर्यकिरणानाम् उष्णतायाः २/३ भागं यद्यपि हिमखण्डः अधिगृह्णाति, तथापि तदीयस्य द्रवता तु न सिध्यति । बहूनां हिमपटलानां भेदनं करणीयं भवति उष्णतया । किन्तु तावतां पटलानां भेदनपुरस्सरं द्रवार्हतां सम्पादयितुम् असमर्थः भवति सूर्यतापः । अतः एव सूर्यकिरणेषु पतितेषु अपि हिमखण्डः द्रवतां न याति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### सिक्थवर्तिकायाः वैशिष्ट्यम्



एषु दिनेषु सिक्थवर्तिकाः विविधाकारिकाः भवन्ति, विविधवर्णीयाः चापि । विविधेषु मङ्गलप्रसङ्गेषु, सन्तोषावसरे च तासाम् उपयोगः क्रियते बहुधा । अन्धकारे सिक्थवर्तिका एव प्रकाशस्य आधारः बहुत्र । सिक्थवर्तिका यदा ज्वाल्यते तदा धूमादिकं न निर्गच्छति । एवं तर्हि सिक्थं कथम् अदृश्यतां गच्छति ? क्व च याति तत् ? एतस्य उत्तरं प्राप्तव्यं चेत् अस्माभिः सिक्थस्य स्वरूपम् अवगन्तव्यम् । अङ्गाराम्ल-जलजनकयोः मिश्रणम् एव सिक्थं नाम । यदा सिक्थवर्तिका ज्वाल्यते तदा सिक्थस्थः अङ्गाराम्लांशः वायुस्थेन आम्लजनकेन मिश्रितः सन् कार्बन्‌डयाक्सैड्रूपं प्राप्नोति । जलजनकंच आम्लजनकेन मिश्रितं सत् बाष्परूपतां याति । एतस्याः उभयविधायाः रासायनिकप्रक्रियायाः कारणतः सिक्थस्य दाहे जाते अपि धूमादीनाम् उद्भवः न भवति ।

## अभिवर्ध्यतां ज्ञानशक्तिः

*अगस्त्मासस्य पञ्चदशे दिनाङ्के स्वातन्त्र्यदिनोत्सवः । तच्च दिनं स्वातन्त्र्यसङ्ग्रामघटनाः स्मारयति । ताः अधिकृत्य अधः सन्ति प्रश्नाः । उत्तरं दातुं प्रयत्यताम् ।*

१. कांग्रेस्पक्षस्य प्रथमम् अधिवेशनं कस्मिंश्चित् नगरे निश्चितम् आसीत् । अनन्तरं कुतः स्थलपरिवर्तनं जातम् ?

२. डा॰ अन्निबेसेण्ट्, सरोजिनीनायडू, नेल्लीसेन-गुप्ता च स्वातन्त्र्यात् पूर्वं किञ्चन विशिष्टं पदं निरूढवत्यः । तत् पदं किम् ?



३. त्रिवर्णध्वजः राष्ट्रध्वजत्वेन कदा अङ्गीकृतः जातः ?

४. 'जनगणमन'गीतम् ऐदम्प्राथम्येन कुत्र गीतम् ?

५. १९२९ तमे वर्षे जून्-मासस्य १४ दिनाङ्के कश्चन राष्ट्रनायकः लाहोरीये केन्द्रीय-कारागारे उपवासाचरणम् आरब्धवान् । तच्च कति दिनानि यावत् प्राचलत् ?

*(उत्तराणि ६६ तमे पुष्ठे)*



# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्र-शीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



MACHIRAJU KAMESWARA RAO



N. SUKUMAR

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'जून्'मासस्य शीर्षिकाप्रेषिका -

**आशा गेरसप्पे**

ब/२, सोनावाला बिल्डिङ्ग् नं - १

**मुम्बयी - ४००००७**

**पुरस्कृतशीर्षिका**





**प्रणमामि चरणारविन्दं मातुः सेवनार्थम् ।**
**विकसितं मुखमण्डलं मातुः स्वागतार्थम् ।**



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. कालरारोगभीतेः कारणतः । १८८५ तमे वर्षे पुणातः मुम्बयीं प्रति ।
२. भारतीयराष्ट्रियकाङ्ग्रेस्संस्थायाः अध्यक्षत्वम् ।
३. १९४७ तमे वर्षे जुलैमासस्य २२ तमे दिनाङ्के संविधानसभायाम् ।
४. कलकत्तायां काङ्ग्रेसाधिवेशने १९११ तमे वर्षे डिसेम्बर्मासे ।
५. जतीन्द्रनाथदासः - ६३ दिनानि यावत् । उपवासान्ते तेन प्राणवियोगः प्राप्तः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkaduthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

